॥ श्रीः ॥

श्रीसदाशिवकृतटीकासमेता

# गंगालहरी ।

शास्त्रिभाऊजीविरचितया भाषा-
टीकया च समलंकृता

साच

पं० रामभद्रशर्म्मणा संशोधयित्वा

भगीरथसूनुहरिप्रसादाख्येन

मुम्बापुर्यां

"निर्णयसागरा"ख्यमुद्रणयन्त्रालयेऽङ्कयित्वा
प्राकाश्यमानीता ।

शकाब्दाः १८२०—संवत् १९५५

सन - 1898

॥ श्रीः ॥

अथ

# गङ्गालहरी सटीका ।

## मंगलाचरणम् ।

पितुः स्कंधे स्थित्वा विमलमुकुरालोकनधिया
हिमांशुं व्याकर्षन्नहिभयविधूनेन मनसा ॥
विधुं हित्वा वर्हिं सरसमणिबुध्या गिरिभुवा
शुभं भीतो नीतो दिशतु बहु वः शंभुतनयः ॥ १ ॥
गंगे त्वद्वारिधारा भवमरणजरापारवीरास्तु सारा
राजदेवादिनारीविहरणविलसत्तीरनीरातुषारा ।
दैत्यारात्यंघ्रिचारा हरगिरिसुशिरोदेहभारातिधीरा
रूपेणाक्रांतसारा निजजनवृजिनौघौघहारा विहारा ॥ २ ॥
अंबां निजमुखाक्रांतचंद्रबिंबां नमाम्यहम् ॥
केदारं वैरिसंदारं मुक्ताहारं च सुन्दरम् ॥ ३ ॥
येनाकारि दशास्यो दशमुखहीनोऽपि बाणसंघेन ॥
वनजायाचौर्यकरः सो वोऽवतु जानकीकान्तः॥ ४ ॥
हरिं रामं गुरुं नत्वा भास्करप्रीतये मया ॥
पीयूषलहरीव्याख्या क्रियते हि यथामति ॥ ५ ॥

## उत्थानिका ।

सं०—अत्रैवं श्रूयते ॥ कविर्जगन्नाथो दिल्लीवल्लभाश्रितस्तद्यवनीसंसर्गदोषभाक् सन् गंगायाः सकाशात् द्विपंचाशत्सोपानांतरितनिजगृहे स्थितः सन् तत्रैव जाह्नव्यागमनस्पर्शनेनात्मशुद्धिं कामयमानः सन् 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कांतासंमिततयोपदेशयुजे' इति काव्यप्रकाशोक्तेः शिवेतरक्षतिफलकगंगास्तुतिरूपं काव्यं चिकीर्षुर्विघ्नविघातायवस्तुनिर्देशात्मकं मंगलमाचरन् स्वाभिमतं प्रार्थयते—

भा०–श्रीगणेशाय नमः ॥ श्रीगंगायै नमः ॥ यहां इस गंगालहरीके विषयमें ऐसा सुनते हैं कि–जगन्नाथपंडित दिल्लीके बादशाहके आश्रित रहते और लवंगीनाम बादशाहजादीके साथ बिटले थे, फेर श्रीकाशीजीमें जातवालोंके सामने शुद्ध होनेके लिये श्रीगंगाजीके किनारेपर अपना घर था, सो गंगाजीसे बावन ५२ सीढ़िएं दूर-पर था वहांही बैठके; जो गंगाजी यहांही आयके, मेरेको न्हिलायकर, शुद्ध करें तो मैं शुद्ध होऊंगा ?, ऐसा कहके, गंगाजीकी स्तुती करने लगे, सो हरएक श्लोकपर एक एक सीढ़ी गंगाजी चढ़ती चलीं आयीं और वहां आयके, उनको शुद्ध किया; उसी स्तुतिको 'गंगालहरी' 'पीयूषलहरी'भी कहते हैं. कारण कि–श्लोकोंके अनुसार गंगाकी लहरें बढ़ीं. अब पहले १ श्लोकमें प्रार्थना कर, अपना प्रार्थना करनेका कारण कहते हैं.

**समृद्धं सौभाग्यं, सकलवसुधायाः किमपि तन्;**
**महैश्वर्यं लीलाजनितजगतः खंडपरशोः ॥**
**श्रुतीनां सर्वस्वं, सुकृतमथ मूर्तं सुमनसां;**
**सुधासौंदर्यं ते सलिलमशिवं नः शमयतु ॥ १ ॥**

सं०–समृद्धमिति । भो गंगे ते तव । युष्मदः षष्ठ्येकवचनविशिष्टस्य 'ते मयावेकवचनस्ये'ति ते आदेशः युष्मदर्थश्च संबोध्यः 'युष्मदः संबोध्यः स्वतंत्रः कर्ता अस्मदो वाच्यः' इत्यभियुक्तोक्तेरित्याद्यन्यत्र विस्तरः । तत्सलिलम् सलति भक्तजनपापादिनाशाय गच्छतीति सलिलं जलम् । षल गतौ 'सलिकली' इत्युणादिसूत्रेण लच् 'सलिलं कमलं जलमित्यमरः' एवं चाशिवशमनप्रार्थनं युक्तमिति भावः । नः अस्माकमशिवमकल्याणं शमयतु नाशयतु । प्रार्थनायां लोट् । तत्किम् यत्सलिलं सकलवसुधायाः सकला चासौ वसुधा च सोर्वी तस्याः 'वसुधोर्वी वसुंधरेत्यमरः' यद्वा कलाभिः सहिता सकला वसु धनं धत्ते इति वसुधा सकला चासौ वसुधा च तस्याः किमपि अनिर्वचनीयममौल्यं वा समृद्धं बहुसौभाग्यं शोभादायकम् अतिचतुरायाः सधनाया अपि पृथिव्याः गंगासलिलं विना न शोभेति । लोकेऽपि अतिचतुरायास्ताटंकनूपुराद्यलंकारसहिताया अपि प्रमदायाः कुंकुमकृष्णमणिभिर्विना न शोभा भ-

वर्तीत्यापामरप्रसिद्धं । पुनस्तत्किम् यत् लीलाजनितजगतः लीलया विलासेन न तु श्रमेण जनितानि उत्पादितानि जगंति चतुर्दशभुवनानि येन सः तस्य खंडपरशोः खंडयति रिपून् हिनस्तीति खंडः तादृशः परशुः शस्त्रविशेषो यस्य भूतेशस्य 'भूतेशः खंडपरशुरित्यमरः' महैश्वर्यं महच्च तदैश्वर्यं च महाविभूतिभूतम् 'विभूतिर्भूतिरैश्वर्यमित्यमरः'। 'सन्मह' दिति समासे 'आन्महादि'-त्यात्वे वृद्धिः गंगासलिलमात्रसहायेनेश्वरेण विलासादेव चतुर्दशभुवनानि कृतानीति भावः। लोकेऽपि कश्चन धने सहाये सति लीलया ब्रह्मपुर्यादिकं निर्मातीति प्रसिद्धम्। पुनस्तत्किम् यत् श्रुतीनां श्रूयते धर्मो याभिस्ताः श्रुतयः चत्वारो वेदाः 'श्रुयजी त्यादिना क्तिन्' 'श्रुतिः स्त्री वेद आम्नाय इत्यमरः' तेषां सर्वस्वं सर्वं च तत्स्वं च सर्वस्वं इदमेव वेदानां धनमिति भावः। यद्वा सर्वं च तत्स्वं च आत्मा इदं सलिलमेव वेदानामात्मेति भावः 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वो स्त्रियां धने इत्यमरः'। पुनस्तत्किम् अथ यत्सुमनसां सुपर्वणाम् 'सुपर्वाणः सुमनस इत्यमरः'। मूर्तं सशरीरम् सुकृतं पुण्यम् 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृष इत्यमरः'। पुनस्तत्किम् यत्सुधासौंदर्यम् सुधेवामृतमिव सौंदर्यं यस्य तत् अतिशुभ्रमित्यर्थः। मधुरास्वादचिरजीवित्वादितत्कार्यकारीति वा। यद्वा सुधासौंदर्यमिति वा पाठः। सुधेति पृथक्पदम् चंद्रो मुखमितिवत्सलिलविशेषणम्। पुनः कथंभूतं सौंदर्यम् सम्यक् दरी हिमाचलकंदरं तत्र भवं सौदरम् भवार्थेऽण् सौदरमेव सौंदर्यमिति चातुर्वर्ण्यादित्वात् ष्यञ् आदौ हिमाचले प्रकाशितमिति भावः। अथवा सुधायाः सौंदर्यं भ्रातृरूपम् 'सोदराद्यदिति' यत्। अत्र दरस्मितमिति श्लोकपर्यंतं शिखरिणी छंदः। तल्लक्षणं तु 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' ति वृत्तरत्नाकर उक्तं 'शिखरिणी य्मौ न्सौ भ्लौ गृतुरुद्रा' इति पैंगलं च बोद्धव्यम्। ननु छंदोंतरं त्यक्त्वाऽनेनैव छंदसा किमिति वर्णनमिति चेत् अत्रोच्यते शिरिणी छंदसि जलदेवताकयगणस्यादौ सत्त्वेन जलस्पर्शरूपाभिमतफलसिद्धिर्भविष्यतीत्याशयेन अशोक-

वनिकान्यायेन वेति कृतधियो विदांकुर्वंतु । तदुक्तम् 'मो भूमिः श्रियमातनोति य जलं वृद्धिं रवह्निर्मृतिं सो वायुः परदेशदूरगमनं त व्योम शून्यं फलम् । जः सूर्यो रुजमादधाति विपुलां भेंदुर्यशो निर्मलं नो नाकः सुखमीप्सितं फलमिदं प्राहुर्गणानां बुधाः' इति । किमपितन् इत्येकं पदं वा । किमपि अनिर्वचनीयं मोक्षप्राप्तिरूपं फलं तनोति विस्तारयतीति किमपि तन् तनु विस्तारे क्विप् एतत्पक्षे कथंभूतं जलमिति योज्यम् । अत्र वाचकलुप्तोपमालंकारः । तदुक्तम् ' उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोरिति ' समृद्धं सौभाग्यमिति आदौ रूपकं च एवं च रूपकोपमयोः संकरः ॥ १ ॥

भा०–हे गंगा ! तेरा जो; संपूर्ण पृथ्वीका कहा न जावै ऐसा अद्भुत बड़ा भारी सौभाग्य ( मानों गलेकी पोत ) ऐसा और खेलते खेलते चौदह १४ लोक बनाये जिसने ऐसे महादेवजीका बड़ा ऐश्वर्य ( भारी जलशोभारूप ) देता और चारों वेदोंका संपूर्ण धन ( तत्त्व ) ऐसा और देवोंका तो मूर्तिमान धर्महो, ( धर्मके समान सेवन करनेलायक ) ऐसा अमृत-समान मीठा स्वाद और अमरकर्ता जल; हमारे अकल्याणोंको नाश करे, यह प्रार्थनाहै ॥ यहांसे अड़तालीस ४८ श्लोकतक शिखरिणी छंदके श्लोक हैं, उसका एक एक चरण सत्रह सत्रह अक्षरोंका है, उसमें हरएक चरणमें दो दो विश्राम है. जैसे कि–एकतो छठे अक्षर-पर और दूसरा सत्रहवेंपर ॥ १ ॥

इदानीं प्रवाहरूपत्वेन जलं वर्णयन् स्वाभिमतं प्रार्थयते—

अब दूसरे २ श्लोकमें प्रवाहरूपकरके जलको वर्णनकर, अपनी चाहीती वस्तूको मांगते हैं.

**दरिद्राणां दैन्यं, दुरितमथ दुर्वासन[illegible];**
**द्रुतं दूरीकुर्वन्, सकृदपि गतो दृष्टिस[illegible]णिम् ॥**
**अपि द्रागाविद्याद्रुमदलनदीक्षागुरुरिह प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः ॥ २ ॥**

सं०–दरिद्राणामिति । भो गंगे इहास्मिँल्लोके ते तव वारां अपां 'आपः स्त्री भूम्नि वार्वारीत्यमरः' अयं पुरोवर्ती सन्निकृष्टे इदंशब्दः । तदुक्तम् 'इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रूपं ।

अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीया' दिति । प्रवाहो निर्झरः 'प्रवाहो निर्झरो झर इत्यमरः' नः अस्माकं अपारां अनंतां श्रियं दिशतु ददातु । दिश अतिसर्जन इति धातोः प्रार्थनायां लोट् अतिसर्जनं दानम् । किं कुर्वन् सन् दृष्टिसरणिं नेत्रमार्गम् 'सरणिः पद्धतिः पद्येत्यमरः' सकृदपि एकवारमपि गतः सन् प्राप्तः सन् दरिद्राणां रंकाणां दैन्यं दीनतां अथानंतरं दुर्वासनहृदां दुष्टा वासना यस्य तद्दुर्वासनं तादृशं हृत् येषां तेषाम् 'स्वांतं हृन्मानसं मन इत्यमरः' दुरितमपि पापमपि 'अंहो दुरितदुष्कृतमित्यमरः' द्रुतं शीघ्रं दूरीकुर्वन् अभूततद्भावे च्विः 'कुगती' ति समासः । कथंभूतः प्रवाहः द्रागाविद्याद्रुमदलनदीक्षागुरुः आसमंतादविद्याः मायाः आविद्याः अखिला अविद्या इत्यर्थः । मायाबहुत्वे प्रमाणं तु 'इंद्रो मायाभिरिति' श्रुतौ वहुवचनं । अत एव तत्त्वज्ञानादेकस्य मुक्तौ कृत्स्नमुक्तिप्रसंगः स्यात् मायैक्येन तन्निवृत्तौ क्वापि संसाराभावादिति शंकालेशोऽपि नेति शांकरभाष्यादिग्रन्थेभ्योऽवधेयमिति दिक् । तद्रूपो यो द्रुमः वृक्षः तस्य दलनं छेदनं द्रागावि[illegible]लनं तस्य दीक्षा उपदेशः तस्याः गुरुः बोधकः । अत्रापि [illegible]रणिं सकृदपि गतः सन्निति योजनीयम् सकृत्प्रवाहदर्शनेत्याणि[illegible] [illegible]वद्या गच्छंतीति भावः । द्रागाविद्याद्रुमेति वा पाठः । अत्राविसीन[illegible] [illegible]ायाः इमे आविद्याः ते च ते द्रुमाश्च शेषं पूर्ववत् ॥ २ ॥

भा०—हे गंगाजी! एकही बार आंखोंके मार्ग ( देखनेमें ) आनेसे; दरिद्रियोंका दरिद्र और दुष्टमतवालोंका पाप, तुरत हरनेवाला ऐसा; और संपूर्ण मायाओं ( अज्ञान ) रूप वृक्षोंका जलदीसे नाश करनेके काममें समर्थ ( नाश करशक्ता ) ऐसा जो, तेरा यह जलप्रवाह ( पूर ) सो इहां हमको अपार संपदा देवे. ऐसी प्रार्थना है ॥ २ ॥

इदानीं तरंगरूपत्वेन जलं वर्णयन्नाशिषः प्रयुंजते—

अब तीसरे ३ श्लोकमें तरंगोंका वर्णन करके आशीर्वाद कहते हैं.

**उदंचन्मार्तंड, स्फुटकपटहेरंबजननी;**
**कटाक्षव्याक्षेपक्षणजनितसंक्षोभनिवहाः ॥**

**भवंतु त्वंगंतो, हरशिरसि गंगातनुभुव-**
**स्तरंगाः प्रोत्तुंगा दुरितभयभंगाय भवताम्॥३॥**

सं०—उदंचदिति । गंगातनुभुवः गंगायास्तनुः मूर्तिः 'स्त्रियां मूर्तिस्तनुस्तनूरित्यमरः' तस्याः भवंति ते गंगातनुभुवः। भवतेः क्विप् 'न भूसुधियोरिति' यण्निषेधादुवङ् । प्रोत्तुंगा उन्नता एतादृशा-स्तरंगा ऊर्मयः 'भंगस्तरंग ऊर्मिर्वेत्यमरः' भवतां भक्तजनानां दुरि-तभयभंगाय दुरितं च भयं च तयोर्भंगाय नाशाय 'क्रियार्थोपपदे-ति' चतुर्थी । भवंतु आशिषि लोट् । कथंभूतास्तरंगाः उदंचन्मार्त-डस्फुटकपटहेरंबजननीकटाक्षव्याक्षेपक्षणजनितसंक्षोभनिवहाः । हे शिवे रंबते शब्दं करोति इति सप्तम्या अलुक् 'हः शंकरे हरौ हंसे रणरोमांचवाजिषु इति नानार्थमंजरी' अबिरबि शब्दे पचाद्यच् 'तत्पुरुषे कृतीति' सप्तम्या अलुक् 'अप्येकदंतहेरंबलंबोदरगजानना इत्यमरः' हेरंबस्य जननी माता पार्वती तस्याः कटाक्षा अपांग-दर्शनानि 'कटाक्षोऽपांगदर्शने इत्यमरः' स्फुटं च तत्कपटं च व्या-जश्च 'कपटोस्त्री व्याजेत्यमरः' स्फुटकपटेन हेरंबजननीकटाक्षाः उदंचन् उदयं प्राप्नुवन् यो मार्तंडः अर्कः 'विकर्तनार्कमार्तंड इत्य-मरः' उदंचन् मार्तंडवत् स्फुटकपटहेरंबजननीकटाक्षाः अति-रक्ता इत्यर्थः । तेषां व्याक्षेपः विलंबः चिरकालपर्यंतं कटाक्षस्थि-तिरित्यर्थः यद्वा व्याक्षेपः संबंधः तेन क्षणं क्षणपर्यंतं जनितः उत्पादितः तादृशः संक्षोभनिवहो भयसमूहो येषां ते। पुनः कथं-भूता अत एव हरशिरसि स्वाधारभूते महादेवमस्तके त्वंगंतः कं-पंतः इतस्ततो गच्छंतो वा त्वगि कंपने इत्यस्मात् 'उखउखी'ति दंडके पठितस्य गमनार्थकत्वात् उभयार्थकत्वं । क्वचित्तु उदंचन्मा-त्सर्येति पाठः । तत्र सापत्न्यभावादुदंचन्मात्सर्येणेति व्याख्येयम्॥ ३

भा०—यह मेरी सवतको लाये हैं ऐसे महादेवजीके प्रत्यक्ष कपटको देखकर, उदय होते सूर्यके तुल्य लाल जे गणेशकी मा ( पार्वती ) के कटाक्ष ( तिरछी दृष्टी ) उनके बहुत देरतक पड़के ठहरनेसे, थोड़ीकदेर-तक भयोंको पाए भये हैं, इसीसे महादेवजीके मस्तकपर कांपते ऐसे जे श्रीगंगाजीके ऊंचे ऊंचे तरंग, वे आप लोगोंके पापोंको नाश करनेवाले होवें. यह आशीर्वाद है ॥ ३ ॥

इदानीं त्वदाश्रयान्मया सर्वे सुरास्तृणप्रायीकृताः अधुना यदि त्वं मे कार्यकरणे उदासीना तर्हि अहं केषामग्रे रोदनं करोमीत्याह—

अब चौथे ४ श्लोकमें मैने तेरे भरोसे अभिमान कर, सारे देवोंको तिनकेसमान गिने. और अब जो तू मेरे काममें उदास भयी तौ मैं किनके आगे रोऊं. ऐसा कहते हैं—

**तवालंबादंब, स्फुरदलघुगर्वेण सहसा;**
**मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः॥**
**इदानीमौदास्यं, भजसि यदि भागीरथि तदा;**
**निराधारो हा रोदिमि कथय केषामिह पुरः॥४॥**

सं०—तवेति। भो अंब जननि 'अंबार्थनद्योरिति' ह्रस्वः तवालंबादाश्रयात् स्फुरदलघुगर्वेण स्फुरन् देदीप्यमानः अलघुर्महान् गर्वोऽहंकारो यस्य तेन मया सर्वे सुरगणाः अव[illegible] अवज्ञायाः पिबादेशः अवहेलनस्य सरणिस्तां सहसा अविचारेण नीताः प्रापिताः। अत्र 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति' भाष्योक्तेः सुरगणरूपे प्रधानकर्मणि क्तः अत एवाभिहितत्वात्तत्र प्रथमेति दिक्। भो भागीरथि! भगीरथस्येयं भागीरथी तत्संबोधनम् 'तस्येदमि'त्यणि 'टिड्ढाणे' ति ङीप्। इदानीमुद्धारसमये यदि औदास्यं उदासीनत्वं उद्धारानुकूलव्यापारशून्यत्वमित्यर्थः भजसि अंगीकरोषि तदा तर्हि निराधारः निर्गतः आधारो यस्य सः एतादृशोऽहमिह लोके केषां पुरः अग्रे रोदिमि रोदनं करोमि हा इति कष्टे खेदे वा इति त्वं कथय वद। रुदिर् अश्रुविमोचने 'रुदादिभ्यः सार्वधातुके' इतीट्। देवानामवहेलनात्तैस्त्यक्तस्त्वमपि अस्मिन्समये यदि त्यजसि तर्हि मे का गतिरिति त्वमेव कथयेति भावः॥४॥

भा०—हे माता! तेरे आश्रयेसे मैनें, प्रकाशित हुवे भये बड़ेभारी अहंकारकरके सब देवोंको विचार न करते अपमानको पहुँचाये. और हे भागीरथि! (भगीरथराजाकी लायीभई) अब उद्धार करनेके वख्त जो मे पर उदास होके उद्धार न करोगी, तौ बड़े खेदकी बात है कि—मेरा 'देवोंनेंभी अपमान करनेके कारण त्याग किया' सो मैं निराधार होके, किनके आगे जा रोऊं सो कहो.॥४॥

पुनरपि प्रवाहरूपं स्मरन् पापहरणं प्रार्थयते—

अब पांचवें ५ श्लोकमें फेर प्रवाहरूपकरके वर्णन कर, पाप हरना मांगते हैं.

**स्मृतिं याता पुंसा, मकृतसुकृतानामपि च या-**
**हरत्यंतस्तंद्रां, तिमिरमिव चंडांशुसरणिः ॥**
**इयं सा ते मूर्तिः, सकलसुरसंसेव्यसलिला;**
**ममांतःसंतापं, त्रिविधमपि पापं च हरताम् ॥५॥**

सं०—स्मृतिमिति। हे गंगे! तव प्रवाहरूपा मूर्तिः अकृतसुकृतानां अतीताद्यतनजन्मसुकृतपातकानां पुरुषाणामपि स्मृतिं स्मरणं याता प्राप्ता सती चंडांशुसरणिः चंडांशवः सूर्यकिरणाः तेषां सरणिः पंक्तिः ‘ सरणिः पद्धतिरित्यमरः ’ तिमिरं अंधकारं यथा तथांतस्तंद्रां अंतःकरणाज्ञानालस्यं नाशयति। यथा सूर्योदयेन तमो नश्यति [illegible]रणेन महापातकिनां तत्सदृशानां पातकं नश्यति। चंद्रांशुसरणिरित्यपि केचित्पठंति। पुनः कथंभूता मूर्तिः सकलाः सुराः देवाः तैः संसेव्यसलिला सेवनीयजला एतादृशी ते मूर्तिः ममांतःसंतापं अंतःकरणस्थं त्रिविधं कायिकवाचिकमानसिकरूपं पापं च तत्कृतं संतापमाधिभूताध्यात्माधिदैवं वा हरताम्। तथा जाते जन्ममरणकष्टान्मुक्तः स्यामिति भावः ॥ ५ ॥

भा०—हे गंगा! जो, स्मरणही करनेमात्रसे, पुण्यरहित मनुष्योंके भी अंतरके अज्ञान और आलस्यको; अंधेरेको सूर्यके किरणोंकी पंक्तिके नाईं नाश करनेवाली ऐसी सब देवोंसे सेवित ऐसे जलवाली तेरी मूर्ति, मेरे भीतरका कायिक ( शरीरसे भया ) वाचिक ( वाणीसे भया ) मानसिक ( मनसे भया ) ऐसा तीन-प्रकारका पाप और तिनसे भयाहुआ अध्यात्म, आधिभूत और आधिदैव ऐसा तीनप्रकारका संताप, हरण करो ॥ ५ ॥

इदानीं राज्यत्यागपूर्वकं त्वत्तीरवासिनां त्वंभःपानेन जायमान आनंदः ततो न्यूनसुखं मोक्षमुपहसतीत्याह—

अब छठे ६ श्लोकमें राज्यत्याग करके, तेरे तीरपर रहनेवालोंका तेरे जल पीनेसे भयाहुवा आनंद अपनेसे थोड़ेसे सुखवाले मोक्षको हँसता है.

**अपि प्राज्यं राज्यं, तृणमिव परित्यज्य सहसा;**
**विलोलद्वानीरं, तव जननि तीरं श्रितवताम् ॥**

**सुधातः स्वादीयः, सलिलभरमातृप्तिपिवतां**
**जनानामानंदः, परिहसति निर्वाणपदवीम्॥६॥**

सं०–अपीति । भो जननि! प्राज्यमपि प्रभूतमपि'प्रभूतं प्रचुरं प्राज्यमित्यमरः' समुद्रांतमपीत्यर्थः। एतादृशं राज्यं राज्ञः कर्म 'पुरोहितादित्वाद्यक्' प्रजापालनात्मकं सहसा तृणमिव परित्यज्य। अनेन लोभाभावः सूचितः। विलोलद्वानीरं विलोलंतः वायुना चंचलाः वानीराः वेतसवृक्षाः यस्मिन् तत् वेतसपर्याये 'रथाभ्रपुष्पविदुरशीतवानीरवंजुला इत्यमरः' अनेन छायानिबिडत्वं सूचितम्। एतादृशं तव तीरं 'कूलं रोधश्च तीरं चेत्यमरः' श्रितवतां सेवतां सुधातः अमृतात्। पंचम्यंतात्तसिल्। स्वादीयः सलिलभरम् अतिशयेन स्वादुः स्वादीयान्। अतिशायने ईयसुन्। स चासौ सलिलभरश्च तं आतृप्तिपर्यंतं 'पंचम्यपाङ्परिभि' रिति समासः पिबतां पानं कुर्वतां पाधातोः शतरि 'पाघ्रे'ति पिबादशः एतादृशानां जनानामानंदः निर्वाणपदवीम् निर्वाणस्य कैवल्यस्य पदवीं मार्गम् 'मुक्तिः कैवल्यनिर्वाणेत्यमरः' परिहसति उपहसति॥ ६॥

भा०–हे माता! बड़े भारी समुद्रपर्यंत पृथ्वीकेभी राज्यको तृण (घास) सरीखा एकदम छोड़कर; वायुसे हिल रहे हैं बेतोंके झाड़ जहां, ऐसे तेरे तटपर रहके, अमृतसेभी जास्ती स्वादवाले ऐसे तेरे जलके पूरको पेटभर पीनेवाले लोगोंको जो आनंद आता है सो आनंद (मोक्षमार्ग) परमानंदकी हांसी करता है. 'ऐसा कि-मेरे आगे तू क्या है?' ॥ ६॥

इदानीं साक्षात्स्वयं स्नानमकुर्वतामपि त्वयि अन्यसंबंधित्वेन स्वावयवपतने तेषामप्युत्तमलोकप्राप्तौ सक्षात्स्नायिनां किं वक्तव्यमित्याह—

अब सातवें ७ श्लोकमें, खुद आप गंगास्नान न करे और मरजावे फेर और कोईनेभी उसके कुछ देहके भागको ला डाला तौभी मुक्ति मिलती है, तौ साक्षात् (खुद) नहानेवालोंको क्या कहना है? यह कहते हैं.

**प्रभाते स्नातीनां, नृपतिरमणीनां कुचतटी;**
**गतो यावन्मातर्मिलति तव तोयैर्मृगमदः॥**

**मृगास्तावद्वैमा–, निकशतसहस्रैः परिवृता;**
**विशंति स्वच्छंदं, विमलवपुषो नंदनवनम् ॥७॥**

सं०–प्रभात इति। भो मातः! प्रभाते उषसि 'प्रत्यूषोऽहर्मुखं कल्यमुषः प्रत्युषसी अपि। प्रभातं चेत्यमरः' स्नातीनामर्थात्तव जले स्नानं कुर्वतीनाम् नृपतिरमणीनां राजसुंदरीणाम्। ब्राह्मणादिस्त्रीणां दारिद्र्यबाहुल्यात् मृगमदो न मिलतीत्युक्तं नृपतिरमणीनामिति। तासां तु संपत्तिबाहुल्यात्स सुलभ इति भावः। कुचतटीगतः कुचानां तट्यः प्रांताः तासु गतः विद्यमानः तटशब्दाज्जातिलक्षणो ङीप् 'तटं त्रिषु' इति कोशात् स्त्रियामपि तटशब्दः रात्रौ रतिसमये लापितः अतएव स्थित इत्यर्थः एतादृशो मृगमदः कस्तूरी 'मृगनाभिर्मृगमदः कस्तूरी चेत्यमरः' तव तोयैरंभोभिः 'सह युक्तेति' तृतीया 'अंभोर्णस्तोयपा[illegible]नीयामित्यमरः' यावद्यस्मिन्नेव काले मिलितः [illegible] भवति तावत्तस्मिन्नेव काले मृगाः मृगयंति उदरपोषणाय तृणादिकमन्वेषयंति ते मृगाः हरिणाः 'मृगे कुरंगवातायुहरिणाजिनयोनय इत्यमरः' विमलवपुषः विमलं मलरहितं वपुर्येषां ते एतादृशाः संतो नंदनवनं नंदयतीति नंदनम्। नंद्यादित्वात् ल्युः तच्च तद्वनं च इंद्रोद्यानं 'नंदनं वनम्। अस्योद्यानमित्यमरः' स्वच्छंदं यथा स्यात्तथा विशंति गच्छंतीत्यर्थः। क्वचित्तु विमलमतय इति पाठः। कथंभूताः मृगाः वैमानिकशतसहस्रैः विमानैश्चरंति गच्छंतीति वैमानिकाः देवाः 'चरती' ति टक् तेषां शतानि शतानां सहस्राणि तैः परिवृताः वेष्टिताः ॥ ७ ॥

भा०–हे माता! प्रातःकाल ( सबेरमें ) स्नानकरती राजाओंकी स्त्रियोंके स्तनोंपर लगीहुई ( रातको संभोगके समय लगाई भई ) कस्तूरी, जब तेरे जलमें मिलती है, तबहीं जिन जिन मृगोंकी वह है वे वे मृग, विमानमें बैठके जानेवाले लाखों देवोंसे घिरेहुए और निर्मल ( झक ) देहवाले होकर, स्वर्गमें इंद्रके बगीचे नंदनवनमें जैसे अपनेको चाहिए ऐसे प्रवेश करते हैं ॥ ७ ॥

---

१ ब्राह्मण आदि, दरिद्री होनेके कारण, उनको कस्तूरी मिलना मुश्किल है जिससे राजा कहे हैं.

इदानीं स्मरणोच्चारणाभ्यां क्रमेण मनःशांतिपापसंसारतापनाशजनकं गंगेति पदं मरणसमये मन्मुखेऽस्त्वित्याह—

अब आठवें ८ श्लोकमें स्मरण ( याद ) करनेसे मनको शांति और मुहसे बोलनेसे पाप और संसार-ताप हरण करनेवाला श्रीगंगाजीका नाम, मरते समय मेरे मुखमें रहे ऐसी प्रार्थना करते हैं.

**स्मृतं सद्यः स्वांतं, विरचयति शांतं सकृदपि;**
**प्रगीतं यत्पापं, झटिति भवतापं च हरति ॥**
**इदं तद्गंगेति, श्रवणरमणीयं खलु पदं;**
**मम प्राणप्रांत-, वदनकमलांतर्विलसतु ॥ ८ ॥**

सं०—स्मृतमिति । भो भागीरथि ! तद् गंगेति पदं सुबंतं मम जगन्नाथस्य प्राणप्रांतः प्राणानामसूनाम् 'पुंसि भून्यसवः प्राणा इत्यमरः, अंतः समाप्तौ । अंतःशब्दोऽधिकरणप्रधानमव्ययम् । प्राणोत्क्रमणसमय इत्यर्थः वदनकमलांतः वदनमेव कमलमिति मयूरव्यंसकादित्वात्समासः । वदनं कमलमिवेत्युपमितसमासो वा । तस्यांतर्मध्ये विलसतु शोभतु खलु निश्चयेन । प्राणोत्क्रमणसमये गंगागंगेत्युच्चारणं भवतु कफवातपित्तैः कंठावरोधनं मास्त्विति भावः । तत् कियत् गंगेति पदं सकृदपि एकवारमपि स्मृतं सत् स्वांतं मनः शांतं इंद्रियनिग्रहक्षमं द्वेषलोभादिरहितं वा विरचयति करोति शांतं सुखयुक्तं वा । शांतशब्दादर्श आद्यच् । 'शर्मशात-सुखानि चेत्यमरः' स्वप्रतियत्ने चुरादिः । पुनस्तत्किम् यत्सकृदपि प्रगीतं सत् प्रकर्षेण गीतमुच्चारितं सत् पापं च पुनः भवतापं भवस्य संसारस्य तापस्तं हरति नाशयति । पुनस्तत्किम् श्रवणरमणीयं श्रवणयो रमणीयं सुखजनकं 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रव इत्यमरः' यद्वा श्रवणाय श्रवणं कर्तुं रमणीयं सुंदरम् 'चतुर्थी'ति योगविभागात्समासः । गंगाशब्दार्थस्तु गां पृथ्वीं स्वर्लोकादागता गंगा 'गन्गम्ययो' रित्यौणादिको गन् प्रत्ययः । तदुक्तं ब्रह्मांडपुराणे 'तिस्रो नद्यो महापुण्या वेणा गोदा च जान्हवी । गां हरीशांघ्रिकात्प्राप्ता गंगेतीह प्रकीर्तिते'ति हरेः पादाच्छंभोर्मस्तकात् गां प्राप्तेति तदर्थः । यद्वा गम्यते सोपानभूतया यया

स्वर्गः सा गंगा । तदुक्तमाचार्यैः 'स्वर्गसोपानसंगे' इति । यास्केनापि निरुक्ते 'गंगा गमना' दिति सामान्यत एवोक्तमिति दिक् ॥८॥

भा०—हे भागीरथि ! जो एकही बार स्मरण करनेसे मनको जितेंद्रिय करदेता है ऐसा और जो एकही बार अच्छी तरहसे बोलनेसे पाप और संसारके संतापको तुरत हरण करता है ऐसा, सुननेमें मनोरंजक जो 'गंगा' यह पद, ( शब्द ) सो निश्चयकरके प्राणोंके जाते समय मेरे मुखकमलमें शोभा करे; यानी मरते वख्त कफ, श्वास कुछ न होके और 'गंगा गंगा' ऐसा बोलूं यह प्रार्थना है. ॥ ८ ॥

इदानीं करटानामपि इंद्रोद्यानापेक्षया प्रियतरं तव तीरं मम श्रमनाशनसमर्थमस्त्विति प्रार्थयते—

अब नवमे ९ श्लोकमें काकों ( कौओं ) को भी तेरे तटपर रहनेका ऐसा सुख मिलता है किं—वह जन्मांतरमेंभी इंद्रके बगीचेकी कभी चाहना नहीं करते ॥

यदंतः खेलंतो, बहुलतरसंतोषभरिता;
न काका नाकाधी,—श्वरनगरसाकांक्षमनसः॥
निवासाल्लोकानां, जनिमरणशोकापहरणं;
तदेतत्ते तीरं, श्रमशमनधीरं भवतु नः॥ ९ ॥

सं०—यदिति । भो भागीरथि ! ते तव तत् एतत् समीपवर्ति तीरं नः अस्माकं श्रमशमनधीरं श्रमस्य शमनं तत्र धीरं समर्थं पंडितं वा 'धीरो मनीषी ज्ञः प्राज्ञः संख्यावान्पण्डितः कविरित्यमरः' भवतु अस्तु । तत्किम् यदंतः यस्य तीरस्यांतः मध्ये खेलंतः क्रीडंतः काकाः करटाः 'काके तु करटारिष्टेत्यमरः' बहुलतरसंतोषभरिताः संतः अतिशयेन बहुलः बहुतरः । अतिशायने तरप् । बहुलतरश्चासौ संतोषश्च तेन भरिताः पूर्णाः एतादृशाः संतः । नाकाधीश्वरनगरसाकांक्षमनसः नाकस्य स्वर्गस्य 'स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालया इत्यमरः' अधीश्वरः पतिः इंद्रः तस्य नगरं अमरावती तत्र साकांक्षं साभिलाषं मनो येषां ते एतादृशा न भवंतीति शेषः । अमरावत्या अपि तीरे अधिकगुणसत्त्वादित्यर्थः । तदेवाह—कथंभूतं तीरं निवासाद्धेतोः'विभाषागुणे स्त्रिया' मिति

हेतौ पंचमी । लोकानां जनिमरणशोकापहरणं जनिरुत्पत्तिः 'जनिरुत्पत्तिरुद्भव इत्यमरः' मरणं निधनं 'मरणं निधनोऽस्त्रियामित्यमरः' शोकः पुत्रकलत्रादिवियोगजनितमनोविकृतिरूपं त्रयाणां द्वंद्वः एषामपहरणं नाशकम् अमरावत्यां तु 'क्षीणे पुण्ये मृत्युलोकं विशंती'ति । पुनरपि भूलोकप्राप्तिरूपानिष्टमप्यस्तीति भावः ॥ कदाचित् विमानस्थेनेंद्रेण तीरे खेलंतः काकान् दृष्ट्वा युष्माभिः क्रीडार्थं मद्वने आगंतव्यमित्युक्ते अत्रैव वयं निवासामः न तव वने त्वागमिष्याम इति तैरुक्तमिति स्पष्टं गंगापुराणे ॥ ९ ॥

भा०–हे गंगाजी ! जिससे तेरे तीर-पर खेलते हैं इसीसे बहुत बड़े संतोषसे भर-पूर ऐसे ऐसे कौवेभी कभी जन्मान्तरमें, स्वर्ग-पति इंद्रके नगर ( स्वर्ग ) की चाहना नहीं करते और जिस तीरपर कुछ दिन रहनेसे लोगोंका जन्म–मरण–आदि शोकवा[illegible] जो संसार सो छूट जाता है ऐसा जो यह तेरा किंनारा, सो हमारे अनेक संसारके श्रमों ( थकवाहों ) को दूर करनेमें चतुर ( दुःखहर्ता ) होवे, यह प्रार्थना ॥ ९ ॥

ननु सर्वोत्कृष्टं वेदाद्यगोचरं परं ब्रह्म विहाय स्वाभिमतफलावाप्तये मामेव किं स्तौषीति चेत्तादृशं ब्रह्म तत्त्वमेव नेतरविषय इत्याह–

अब दशवें १० श्लोकमें, यदि तू कहे, कि–सबमें उत्तम और वेदोंमें कहे भये ब्रह्मको छोंड़, मेरेहीसे क्यों इच्छित-फल मांगता है ? तौ वैसा ब्रह्म तूहीं है, तू कुछ मायिक वस्तु नहीं है, ऐसा कहते हैं ॥

**न यत्साक्षाद्वेदै, रपि गलितभेदैरवसितं;**
**न यस्मिञ्जीवानां, प्रसरति मनोवागपसरः॥**
**निराकारं नित्यं, निजमहिमनिर्वासिततमो;**
**विशुद्धं यत्तत्त्वं, सुरतटिनि तत्त्वं न विषयः॥१०॥**

सं०–न यदिति। भो सुरतटिनि! सुराणां देवानां तटिनी धुनी तत्संबोधनम् 'तटिनी ह्रादिनी धुनीत्यमरः' तद्वक्ष्यमाणविशिष्टत्वं निखिलजगत्कारणत्वेन प्रसिद्धं ब्रह्मत्वं । सर्वं वाक्यं सावधारण-

१ गंगापुराणमें ऐसी कथा है कि–एक बार इंद्रने विमानमें बैठके, जाते जाते गंगाके किनारे-पर खेलते कौओंसे कहा कि–तुम, खेलनेको मेरे स्वर्गके बगीचेमें आवो—तब कौओनें कहा -हमतो इहांही रहेंगे उहां न आवेंगे.

मिति नान्या त्वमेवेत्यर्थः असीति शेषः न विषयः त्वमितरविषय-भूता नासीत्यर्थः । तत्किम् यद् ब्रह्म गलितभेदैः गलितो गतो भेदो येभ्यस्ते गलितभेदास्तैरद्वैतप्रतिपादकैः 'नेह नानास्ति किंचने' त्यादि ब्रह्मरूपैः साक्षाद्वेदैरपि प्रत्यक्षश्रुतिभिरपि न अवसितं इयत्तया न निश्चितमित्यर्थः । षोंतकर्मणीति धातो'र्द्यति स्यती'तीत्वं । उपसर्गवशादुक्तार्थलाभः तदुक्तम् 'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते' इति । ननु 'नेह नानास्ति' इत्यादिश्रुतिभिः इतराभाव-बोधनेऽपि स्वाभावाबोधनेन कथमद्वैतसिद्धिरिति चेन्न स्वस्मिन्नपि स्वप्रवृत्त्या स्वाभावस्यापि बोधनात् अत एव 'ससजुषोरुः' 'खर-वसानयोर्विसर्जनीयः' इत्यादिनिर्देशाः संगच्छंते इति दिक् । वेदानामप्यगोचरमित्युक्तत्वादिति भावः । पुनः कथंभूतम् यस्मिन् ब्रह्मणि जीवानां व्यासादिप्राणिनां मनोवागवसरः मनश्च वाक् च अनयोः समाहारः मनोवाक् 'द्वंद्वश्च प्राणी' त्येकवद्भावः मनो वाचोऽवसरो व्यापार इति यावत् न प्रसरति न प्रसरणशीलो भव-तीत्यर्थः 'यतो वाचो निवर्तंते अप्राप्य मनसा सहे'ति श्रुतेरिति भावः । ननु मनोवागित्यत्र 'द्वंद्वश्च प्राणी'ति नियमान्नित्यसमा-हारे 'द्वंद्वाच्चुदषहांता' दिति टचा भाव्यम् तथा चोक्तप्रयोगासं-गतिरिति चेन्न समासांतविधेरनित्यत्वात् अत्र प्रमाणं तु अश्वा-दिगणे राजन्छब्दपाठ इति दिक् । मनःशब्दस्य प्राण्यंगत्वाभा-वेन शंकैव नेति वा । पुनः कथंभूतं निराकारं निर्गतः आकारो यस्य तत् अशरीरमित्यर्थः 'अपाणिपाद'मित्यादिश्रुतेः पुनः कथं-भूतं नित्यं निरंतरं भवं नित्यम् 'अव्ययात्त्यप्' उत्पत्त्यादिशून्य-मित्यर्थः 'न जायते म्रियते' इत्यादिस्मृतेरित्यर्थः । पुनः कथं-भूतं निजमहिमनिर्वासिततमः निजमहिम्ना स्वमाहात्म्येन निर्वा-सितं नाशितं तमो येन तत् स्वप्रकाशमित्यर्थः 'यस्य भासा सर्व-मिदं विभाति' 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥ यच्चंद्र-मसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इत्यादिश्रुतिस्मृतिभ्यामि-त्यर्थः । पुनः कथंभूतं विशुद्धं मायामलरहितम् नारायणतीर्थसर-स्वतीभिरपि गंगैवाद्वितीयं ब्रह्मेत्युक्तम् । 'न नानेहास्तीतिश्रुतिव-

चनजातैर्भगवती निरस्यैवाभासि स्वयमखिलभेदं सुरधुनि । चिदात्मैका नित्या चितिसुखसदाविष्कृतिरसि त्वदीयं मोक्षार्थं श्रयति जनिता जीवनपद' मिति । अत्र शिष्यबुद्धिवैशद्याय किंचिदुच्यते । वेदो नाम ब्रह्मप्रतिपादकपौरुषेयं प्रमाणवाक्यम् स द्विधा मंत्रात्मको ब्राह्मणात्मकश्च । तत्र मंत्रा नामानुष्ठानकारकभूतद्रव्यदेवताप्रकाशकाः ते च ऋग्यजुःसामभेदात्त्रिधा पादबंधं गायत्र्यादिछंदोविशिष्टा ऋचः अग्निमीळ इत्यादयः गीतविशिष्टाः ता एव सामानि उभयविलक्षणानि यजूंषि ब्राह्मणमपि त्रिविधं विधिरूपं अर्थवादरूपं उभयविधलक्षणं चेति मीमांसाग्रंथेभ्योऽवधेयम् इह विस्तरभयान्न तन्यत इति दिक् ॥ १० ॥

भा०—हे देवोंकी नदी ! जो ब्रह्म, अद्वैत ' एकही ' है और दूसरा कुछ नहीं है ऐसे भेदबुद्धि निकालनेवाले वेदोंने भी ऐसाही ' ब्रह्म ' है ऐसा प्रत्यक्ष ' खुलासा करके ' नहीं कहा. और जिस ब्रह्ममें व्यास आदि जीवोंके मन और वाणी नहीं घुसती यानी वह नतो मनसे सोचा जाता है और न मुहसे कहा जाता है ऐसा और जो, हाथ पांव, आदि आकारोंसे रहित ' उन्होंमें बँधाहुआ नहीं ' ऐसा और नित्य, यानी उत्पत्ति नाश आदिकरके रहित ' निर्विकार ' ऐसा और अपने तेजोंसेही अँधेरा दूर करनेवाला अर्थात् स्वयं-प्रकाश, ऐसा और शुद्ध यानी मायाके मलोंसे रहित-ऐसा जो तत्व ब्रह्म सो तूही है; तू मायाकी बनाई ऐसी कोई वस्तु नही है ॥ १० ॥

इदानीं निखिललोकानां साधारण्येनात्यंतदुष्प्रापविष्णुपददात्री त्वं न केनापि तुलनीयेत्याह—

अब ग्यारहवें ११ श्लोकमें, सब लोगोंको बराबरीसे, दुर्लभ विष्णु-पद ' वैकुंठ 'को देनेवाली तू, कोईसेभी तुल्यकरके बतावने ( उपमा देने ) लायक नहीं है, ऐसा कहते हैं.

**महादानैर्ध्यानैर्, बहुविधवितानैरपि च य-**
**न्न लभ्यं घोराभिः, सुविमलतपोराशिभिरपि ॥**
**अचिंत्यं तद्विष्णोः पदमखिलसाधारणतया;**

**ददाना केनासि, त्वमिह तुलनीया कथय नः ॥११**

**सं०**–महादानैरिति । भो भागीरथि! अखिलसाधारणतया अखिलानां सर्वलोकानां साधारणता साधारण्यं न तु न्यूनाधिक्यं तया विष्णोर्नारायणस्य 'विष्णुर्नारायणः कृष्ण इत्यमरः' पदं चरणं वैकुण्ठाख्यस्थानं वा । यद्वा विष्णोः पदं वस्तु विष्णुरूपवस्त्वित्यर्थः अस्मिन्पक्षे राहोः शिर इतिवत् षष्ठी । तथा च कोशः ' पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुष्विति' ददाना दात्री । 'नलोके'ति षष्ठीनिषेधात् पदमिति द्वितीया । एतादृशी त्वमिह लोके केन तुलनीया उपमेयाऽसीति नः अस्मान् कथय वद तादृशस्य कस्याप्यभावान्न केनाप्युपमेयासीति भावः । यद्वा केन ब्रह्मणा तुलनीयासि अपितु नेत्यर्थः । ब्रह्मणोऽपि तादृशसामर्थ्याभावादिति भावः । तुलनिष्कर्षे इतिधातोरनीयर् । विष्णुरूपं वस्त्विति पक्षे सारूप्यमुक्तिः प्रतीयते । तदुक्तं श्रीमच्छंकराचार्यैः ' त्वन्मध्याद्भृगुलांछनो गरुडगः पीतांबरो निर्गतः' । ' नारायणं वा शिवं ' इति वेति । तत्किं यद्विष्णुपदं महादानैः गजाश्वशिबिकातुलादिरूपैः ध्यानैः चित्तैकाग्रतया चिन्तनैः अपि च बहुविधवितानैरपि च बहुविधाः अनेकप्रकाराः ये वितानाः क्रतवः ' क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छक इत्यमरः' बहुविधाः ये वितानाः उल्लोचास्तैः 'अस्त्री वितानमुल्लोच इत्यमरः' घोराभिः भयंकराभिः परमकष्टसाध्याभिर्वा सुविमलतपोराशिभिरपि सुविमलानि निर्मलानि न तु मारणोच्चाटनवशीकरणजनकानि तादृशानि यानि तपांसि तेषां राशयः समूहाः तैरपि न लभ्यं न प्राप्यम् । अर्हार्थलभधातोः 'पोरदुपधा'दिति यत् । पुनस्तत्किम् अचिंत्यं चिंतनानर्हं वागगोचरमिति भावः ॥ ११ ॥

**भा०**–हे भागीरथि! जो विष्णुपद, ( वैकुंठ ) अथवा ( भगवानका चरण ) अथवा ' सारूप्यमुक्ति ' जो हाथी, घोड़े आदि महादानोंकरके और एकचित्त होके, ध्यान करनेसे और अनेक प्रकारके

यज्ञोंकरके और भारी कष्टोंवाली निर्मल यानी मारण उच्चाटनवाली नहीं, ऐसी तपश्चर्याओंकरकेभी मिल न शके, ऐसा विष्णु-पद, सब लोगोंको बराबरीसे देनेवाली ऐसी तू किसके साथ तुलना करी जावे ( उपमा दीजावे ) सो हमारे आगे कह? अर्थात् कोईसेभी नहीं, क्योंकि तेरे समान ऐसा और कोई हैही नहीं ॥ ११ ॥

इदानीं दर्शनमात्रेण नृणां संसारभयहन्त्रीं त्वां शिवः पार्वत्यनुरोधत्यागपूर्वकं निरंतरं शिरसि बिभर्तीत्याह—

अब बारहवें १२ श्लोकमें, दर्शनही मात्र करनेसे मनुष्योंके संसारभयको भंग करनेवाली तेरेको, महादेवजी प्रिया-पार्वतीसे अनुकूल ( मरजीमाफक ) रहना छोड़कर, निरंतर ( हमेश ) मस्तकमें धारण करते हैं ऐसा कहते हैं.

**नृणामीक्षामात्रा, दपि परिहरंत्या भवभयं;**
**शिवायास्ते मूर्तेः, क इह महिमानं निगदतु ॥**
**अमर्षम्लानायाः, परममनुरोधं गिरिभुवो;**
**विहाय श्रीकंठः, शिरसि नियतं धारयति याम् १२**

**सं०**—नृणामिति। भो भागीरथि ! ते तव मूर्तेः तनोः महिमानं परमदुर्घटकार्यकर्तृत्वरूपं माहात्म्यं इहलोके को निगदतु अपि तु न कोपीत्यर्थः। माहात्म्यबाहुल्येन कस्यापि वाणीप्रसराभावादिति भावः। कथंभूतायाः मूर्तेः ईक्षामात्रादपि। ईक्षैव ईक्षामात्रामिति मयूरव्यंसकादित्वात्समासः। 'मात्रं कार्त्स्न्येवधारणे' इति कोशादवधारणं मात्रशब्दार्थः तस्मादपि नृणाम् 'नृचे' त्यस्य वैकल्पिकत्वाद्दीर्घाभावः भवभयं भवात्संसाराद्भयम् हरन्त्याः तदुक्तं 'गंगे त्वद्दर्शनान्मुक्तिर्न जाने स्नानजं फलमिति'। पुनः कथंभूतायाः शिवायाः शिवयतीति शिवा 'तत्करोतीति' ण्यंतात्पचाद्यचि टाप् तस्याः यद्वा शिवं कल्याणं अस्त्यस्याः सा तस्याः यद्वा शिवो महादेवो भर्तृत्वेन अस्त्यस्या इति यद्वा शिवो मोक्षोऽस्त्यस्या इति पक्षचतुष्टयेऽपि अर्शआद्यच्। 'शिवो मोक्षे महादेवे सुखे क्षेमे जले शिवमिति शाश्वतः'। श्रीकंठः कपर्दी 'उग्रः कपर्दी

श्रीकंठः शितिकंठः कपालभृदित्यमरः' । अमर्षम्लानायाः अमर्षेण कोपेन ' कोपक्रोधामर्षरोष इत्यमरः'। म्लाना ग्लाना तस्याः एतादृशः गिरिभुवः गिरेर्हिमाचलात् भवतीति गिरिभूः पार्वती क्विप् तस्याः परमसुत्कृष्टं अनुरोधं अनुसरणं विहाय त्यक्त्वा यां गंगां शिरसि नियतं निरंतरं यथा स्यात्तथा धारयति बिभर्ति स्वार्थे णिच् सपत्नीभूतगंगायाः मस्तकधारणेन जातकोपाया अपि पार्वत्याः सांत्वनादिकं विहाय अधिकगुणवतीं त्वामेव शिरसि बिभर्तीति भावः । लोकेऽपि अतिगुणवतो हीरकस्य मस्तकधारणं प्रसिद्धमेव ॥ १२ ॥

भा०—हे भागीरथि ! जो तेरी मूर्ति, एक बारभी दर्शन करनेमात्रसें मनुष्योंके संसारके जन्ममरण आदि भयोंको हरण करती है ऐसी और जिस तेरी मूर्तिको, ' मेरी सौतको माथेपर बैठाये हैं, ऐसे क्रोध करके उतर गया है चित्त जिसका ऐसी पार्वतीके अच्छीतरहसे अनुकूल ( मरजीमाफक ) चलनेको छोड़कर, श्रीमहादेवजी निरंतर ( हमेशा ) माथे-पर धर राखते हैं, ऐसी शिवा ( कल्याण करनेवाली या मोक्षको देनेवाली ) तेरी मूर्तिके माहात्म्य ( बड़प्पन ) को कौन खुलासा करके कह शकेगा ? सो तू कह ? " कोईभी नहीं " ॥ १२ ॥

इदानीं उन्मत्तादिभिरपि विनिंद्यानि परिहार्याणि अवाच्यानि यानि पापानि तन्नाशिनी त्वमेवेत्याह—

अब तेरहवें १३ श्लोकमें, उन्मत्त ( मस्त ) आदि लोकभी जिनकी निंदा करैं, त्याग करैं और मुहसे न बोलैं ऐसे ऐसे पापोंकी नाश करनेवाली तूही है, ऐसा कहते हैं.

**विनिंद्यान्युन्मत्तै, रपि च परिहार्याणि पतितै;**
**रवाच्यानि व्रात्यैः, सपुलकमपास्यानि पिशुनैः**
**हरंती लोकाना, मनवरतमेनांसिकियतां;**
**कदाप्यश्रांता त्वं, जगति पुनरेकाविजयसे॥१३॥**

सं०—विनिंद्यानीति । भो गंगे ! उन्मत्तैरविचारकारिभिः विशे-

षेण निंद्यानि निंदितुं योग्यानि अपि च पतितैरपि प्रायश्चित्तादिभिः परिहार्याणि त्याज्यानि व्रात्यैर्गर्भाधानादिसंस्कारहीनैः 'व्रात्यः संस्कारहीनः स्यादित्यमरः' अवाच्यानि वक्तुमयोग्यानि पिशुनैः कर्णेजपैः 'कर्णेजपः सूचकः स्यात्पिशुनो दुर्जनः खल इत्यमरः' सपुलकं सरोमांचं यथा स्यात्तथा अपास्यानि त्याज्यानि एतादृशानि कियतां किंपरिणाममेषां ते कियंतः तेषां । 'किमः संख्यापरिमाणे डति चे' ति वतुप् 'किमिदंभ्यां बोधः' बहूनामित्यर्थः । लोकानामेनांसि यंत्यधः एभिस्तानि, यंति गच्छंति प्रायश्चित्तादिना वा तानि एनांसि कलुषाणि 'इण् आगसी' त्यसुण् 'कलुषं वृजिनैनोघमित्यमरः' हरंति नाशयंति एका सती कदापि कस्मिन्नपि कालेऽश्रांता अखिन्ना एतादृशी त्वं जगति विश्वस्मिन् विजयसे सर्वोत्कर्षेण वर्तसे । लोके कश्चन कदाचिदेवं कार्यं यदि करोति तदा [illegible] बहुभिर्वा एकं महत्कार्यं कृतं चेत् सर्वे श्रांता भवंति त्वं त्वसहायाऽद्वितीया सर्वेषां पापानि निरंतरं हरस्यपि न श्रांतेति ममापि पापं दूरीकरिष्यस्येवेति भावः ॥१३॥

भा०–हे माता गंगा ! जिन पापोंको उन्मत्त ( धूर्त ) लोकभी विशेष निंदा करैं और पतित ( जो शुद्धही न हो शकै ऐसे ) लोकभी त्यागही करैं और व्रात्य ( संस्कारहीन शूद्रसे ) लोकभी मुहसे न कहैं और पिशुन ( खल ) लोकभी कंटाला खा-कर, त्याग करैं, ऐसे ऐसे पाप, कितने-एक ( बहुतसे ) लोकोंके, निरंतर अकेली हरण करती है पर थकती नहीं ऐसी तू; सारे जगतमें जय-पाती है. "तू ऐसे ऐसे पापोंको हरती है तो मेरे पापोंकोभी हरेगी" ॥ १३ ॥

इदानीं तव गुणानामेवायं दोषः यत् पृथ्वीतले शोकनाशाय स्वर्लोकात्पतंत्यास्तव निर्लोभोऽपि शिवः कपर्दस्थापनमिषेण प्रतिग्रहं चकारेत्याह—

अब चौदहवें १४ श्लोकमें, यह तेरे गुणोंहिका दोष है कि–तू पृथ्वीपर शोक-हरनेको तो आई पर, निर्लोभी होकेभी महादेवजीने अपनी जटाके जूड़ेमें तेरेको रखकर, लोभ किया ऐसा दोष सूचन करके, माहात्म्यप्रकाशक स्तुति करते हैं.

**स्खलंती स्वर्लोका, दवनितलशोकापहृतये;**
**जटाजूटग्रंथौ यदसि विनिबद्धा पुरभिदा ॥**
**अये निर्लोभाना, मपि मनसि लोभं जनयतां;**
**गुणानामेवायं तव जननि दोषः परिणतः॥१४॥**

सं०—स्खलंतीति । भो भागीरथि! अवनितलशोकापहृतये अवन्याः पृथिव्या तलं स्वरूपं ' अधः स्वरूपयोरस्त्रीतलमित्यमरः' तत्र यः शोकः तस्यापहृतिर्नाशः तस्यैव अपहृतिं कर्तुमित्यर्थः स्वर्लोकात् स्खलंती पतंती त्वं पुरभिदा शिवेन जटाजूटग्रंथौ जटाजूटस्य कपर्दस्य ग्रंथिः तत्र यद्विनिबद्धा विशेषेण निरंतरं बद्धासि । उपसर्गद्वयं कदापि अन्यत्र गमनाभावं बोधयति । अये जननि निर्लोभानामपि निर्गतः लोभो येषां तेषामपि मनसि चित्ते लोभं इच्छां जनयतां कुर्वतां तव गुणानामेव दयादाक्षिण्यादीनामेवायं दोषः परिणतः प्रसृतः । निर्लोभतया कदाप्यप्रतिग्रहकर्ता शिवः तव गुणलोभवशेनैव अपूर्वं प्रतिग्रहं चकारेति भावः ॥ १४ ॥

भा०—हे माता! पृथ्वीमेंके शोकोंको नाश करनेके लिये स्वर्गलोकसे गिरतेके साथ जो महादेवजीने तेरेको मस्तकपर जटाके जूडेमें पक्की बांध रक्खी यह एक तेरे दया चतुराई इत्यादि गुणोंहीका दोष प्रकाश भया; कि—जो निर्लोभियोंकेभी मनमें लोभ पैदा करते हैं.' "तेरे गुणोंहीसे लोभ पाके वैराग्यवान् शिवजीने नया प्रतिग्रह किया." ॥ १४ ॥

इदानीं सर्वेषां रक्षणक्षमं परमौषधं त्वमसीत्याह—
अब पंद्रहवें १५ श्लोकमें, सब लोकोंके रक्षण करनेमें समर्थ औषध तूही है ऐसा कहते हैं. ॥

**जडानंधान्पंगून्प्रकृतिबधिरानुक्तिविकलान्;**
**ग्रहग्रस्ता नस्ता, खिलदुरितनिस्तारसरणीन्॥**
**निलिंपैर्निर्मुक्ता, नपि च निरयांतर्निपततो;**
**नरानंब त्रातुं त्वमिह परमं भेषजमसि ॥ १५ ॥**

सं०—जडानिति । भो अंब! इह कलौ जडान् अज्ञान् क्रियासु मंदानित्यर्थः 'जडोऽज्ञ इत्यमरः' अंधान् चक्षुरिंद्रियहीनान् पंगून्

पादगतिहीनान् प्रकृतिबधिरान् प्रकृत्या स्वभावेन बधिरान् श्रोत्रें-द्रियहीनान् शब्दश्रवणासमर्थानित्यर्थः । उक्तिविकलान् उक्तिभि-र्वचनैर्विकला हीनास्तान् । 'पूर्वसदृशेति' समासः । 'व्याहार उ-क्तिर्लपितं भाषितं वचनं वच इत्यमरः' वचिधातोः क्तिनि 'वचि स्वपीति' संप्रसारणं । ग्रहग्रस्तान् ग्रहैरादित्यादिनवग्रहैर्ग्रस्ताः कव-लिताः कृतपीडा इति यावत् । तदुक्तं ज्योतिःशास्त्रे 'स्वर्क्षाचंद्र-खलास्त्रिखारिषुं शुभाः सप्ताद्यगोऽब्जः पुनश्चापुत्राद्व्ययधर्ममृत्युषु कविः स्वास्तात्रिकोणे गुरुः । सौम्यो व्यंत्यसमेऽखिला भगवता शुक्रे नवेषुद्विगश्चंद्रोऽथो निजभाद्द्युभं नवहृतं त्र्यद्रीपुशेषं न सदिति' । अस्ताखिलदुरितनिस्तारसरणीन् अखिलानि च तानि दुरितानि च पापानि तेषां निस्तारणं नाशनम् तस्य सरणिः प्राय-श्चित्ताद्याचरणमार्गः । अस्ताऽविद्यमानाऽखिलदुरितनिस्तारसरणि-र्येषां ते तान् पापबाहुल्येन अविद्यमानप्रायश्चित्तादीनित्यर्थः । निर्लिपैर्देवैः 'अनुपसर्गाल्लिंपे' तिसूत्रस्थेन 'नौ लिंपेः संज्ञाया' मितिवार्तिकेन शः । मुक्तान् स्वहस्तेन परित्राणाभावात् अपि च निरयांतर्निरयस्य नरकस्य अंतर्मध्ये । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियामित्यमरः' निपततः नितरां पतंति ते निपतंतस्तान् एतादृशान् नरान् मनुष्यान् त्रातुं त्वं परमं उत्कृष्टं भेषजं औषध-मसि 'भेषजौषधभैषज्यानीत्यमरः' एवं च सर्वभेषजं त्वं सर्वा-तर्गतस्य ममापि भेषजं भविष्यस्येवेति भावः ॥ १५ ॥



भा०–हे माता! इस कलियुगमें, अज्ञानी, अंधे, लँगड़े, जन्मसे बहिरे, गूंगे, सूर्य आदि ग्रहोंकरके पीडित, जिनके पाप शोधन करनेको कोईभी रस्ता ( प्रायश्चित्त ) नहीं है, तो देवोंनेभी अपनेसे रक्षण न होनेके कारण छोडदिये हैं और नरकमें गिरते ऐसे ऐसे संपूर्ण मनुष्योंको रक्षण करनेके वास्ते तू श्रेष्ठ औषध है. "जब तू सबोंकी औषध है तौ सबमें रहेभये मेरी-भी होवेही गी " ॥ १५ ॥

इदानीं कपिलमुनिनिर्दग्धास्त्वत्संबंधवशात् स्वर्गे दिव्यदेहधा-रिणः सगरजाः सगरपुत्राः अद्यापि तव महिमानं अहो धन्या

जाह्नवी निधनं गता अपि वयं यत्संगवशादीदृशा जाता इत्याकारकं गायंतीत्याह—

अब सोलहवें १६ श्लोकमें, कपिलमुनिके नेत्राग्निसे जलेहुये सगर-राजाके पुत्र तेरा स्पर्श उनके देहकी राखको होनेसे दिव्य-देह होके, स्वर्गमें बैठे बैठे 'धन्य है गंगा कि—मरेभी हम लोग जिसके संगमें ऐसी पदवीको पहुँचे ' ऐसे अभीभी तेरी महिमाको गाते है, ऐसा कहते हैं. ॥

**स्वभावस्वच्छानां, सहजशिशिराणामयमपा;-**
**मपारस्ते मातर्जयति महिमा कोऽपि जगति ॥**
**मुदा यं गायंति, द्युतलमनवद्यद्युतिभृत:;**
**समासाद्याद्यापि,स्फुटपुलकसांद्रा: सगरजा: १६**

से०—स्वभावेति । ओ मातः ! स्वभावस्वच्छानां स्वभावेन निसर्गेण न तु कृत्रिमेण ' स्वरूपं च स्वभावश्च निसर्गश्चाथ वेपथुरित्यमर: ' स्वच्छानां निर्मलानां सहजमनायासेन मणिकाद्यसंक्षेपेण शिशिराणां शीतलानां । उक्तं च कालिदासेन ' शैत्यं हि यत्सा प्रकृतिर्जलस्येति ' । एतादृशीनां ते अपां पाराम् ' आप: स्त्रीभूम्नि वार्वारीत्यमर:' अपार: अमर्याद: अयंकोऽपि विलक्षणो महिमा माहात्म्यं जगति जयति सर्वोत्कर्षेण वर्तते । सगरजा: सगरराजपुत्रा: अनवद्यद्युतिभृत: संत: न अवद्या गर्ह्या अनवद्या स्तुत्या । 'अनद्यपण्ये' ति सूत्रेण गर्हायां अवद्येति निपातितम् । तादृशी चासौ द्युतिश्च तां बिभ्रति ते एतादृशा: संत: अतएव स्फुटपुलकसांद्रा: संत: स्फुटा: प्रकटा: ये पुलका: रोमांचा: तै: सांद्रा: निबिडा: संत: महिमानं अद्यापि मुदा प्रीत्या गायंति वदंतीत्यर्थ: । किं कृत्वा द्युनलं दिवस्तलम् 'दिवउदि'-त्युत् 'द्यौ दिवौ द्वे स्त्रियामित्यमर:' समासाद्य अधिष्ठाय । सगरेण हि अश्वमेधकरणाय अश्वो विनिर्मुक्त: तत्संरक्षणाय स्वपुत्रा नियुक्ता: सोऽश्व इंद्रेण चौर्येण पाताले नीत: सगरपुत्रा अपि तदानयनाय तत्र गता: ते सर्वे कपिलेन निर्दग्धा: पश्चात् भगीरथेन स्वर्गात् गंगामानीय जीविता इति स्पष्टं रामायणादौ ॥१६॥

भा०—हे माता! स्वभावहीसे निर्मल और आपहीसे ठंढे जे तेरे जल इनका यह अद्भुत और अपार ऐसा महिमा जगत्में जय पाता हैं; जिस महिमाको परम-सुंदर तेजस्वी होते स्वर्गमें बैठकर, आनंदसे सारे अंगके रोवें ठाढ़े होगये हैं ऐसे उत्कंठित होकर, सगर-राजाके पुत्र[1] गायन करते हैं ॥ १६ ॥

इदानीं स्वल्पपापिनां दोषापनुत्तये त्रिजगति गोदावर्यादीनि बहूनि तीर्थानि संति अतीतप्रायश्चित्तानां तु दोषहरणे त्वत्सदृशी त्वमेव समर्थेत्याह—

अब सत्रहवें १७ श्लोकमें, थोड़े पापियोंके पाप दूर करनेको तो त्रैलोक्यमें गोदावरी-आदि बहुतसे तीर्थ हैं पर शुद्धकी शुद्धि करनेको कोई प्रायश्चित्तही नहीं, उनके दोष हरनेको तो तेरेसरीखी तूही है; ऐसा कहते हैं. ॥

**कृतक्षुद्रैनस्का, नथ झटिति संतप्तमनसः;**
**समुद्धर्तुं संति, त्रिभुवनतले तीर्थनिवहाः ॥**
**अपि प्रायश्चित्त, प्रसरणपथातीतचरिता-**
**न्नरान्दूरीकर्तुं त्वमिव जननि त्वं विजयसे॥१७॥**

सं०—कृतेति। भो जननि! कृतक्षुद्रैनस्कान् कृतानि क्षुद्राणि अल्पानि पलांडुभक्षणादीनि एनानि पापानि यैस्ते तान् 'शेषा-द्विभाषे' ति कप्। अथ पापाचरणानंतरं झटिति शीघ्रं संतप्तम-नसः। संतप्तं पश्चात्तापयुक्तं मनो येषां ते तान् एतादृशान् नरान् समुद्धर्तुं आचरितपापात् दूरीकर्तुं त्रिभुवनतले त्रयाणां भुवनानां

---

[1] सगरराजाने अश्वमेध यज्ञ करनेके लिये घोड़ा छोंडा और उसके रक्षणके-वास्ते पुत्रोंको आज्ञा दिया, उस घोड़ेको इंद्र पकड़कर, पातालमें लेगये और कपिलमुनिके आश्रममें बांधदिया. अब उसे लानेके वास्ते ढूंढ़ते ढूंढ़ते उनके साठ हजार ६०,००० पुत्र उहां गये और घोड़ा देखा और मुनिको समाधिमें देखे, विचार किया कि—चोर यही है, सो मारने लगे सो मुनिकी आंखें खुलीं और उनमेंसे अग्नि निकला सो वे जलगये, फेर उन्होंके कहनेसे भगीरथने तप किया और गंगाजीको पृथ्वीपर लाय, उन-जलेहुए सगरपुत्रोंका उद्धार किया ऐसी रामायणादिकोंमें कथा है.

समाहारस्त्रिभुवनं 'तद्धितार्थे' ति समाहारे द्विगुः पात्रादित्वात् स्त्रीत्वाभावः । तस्य तलं तत्र तीर्थनिवहाः तीर्थानां गोदावर्यादितीर्थानां निवहाः समूहाः संति वर्तंते । भो जननि ! प्रायश्चित्तप्रसरणपथातीतचरितान् प्रायश्चित्तस्य पापनाशनसमर्थधर्मविशेषस्य प्रसरणं आचरणं तस्य पंथा मार्गः । 'वाटः पंथाश्च मार्गश्चेति त्रिकांडमंडमंडनः ' । 'ऋक्पूरब्ध्विवाति ' समासांतो अप्रत्ययः । प्रायश्चित्तप्रसरणपथं अतीतं अत्यंतं गतं चरितं येषां ते तानपि बहुकालं बुद्धिपूर्वकं महत्पापाचरणेन अविद्यमानप्रायश्चित्तानपीत्यर्थः । उक्तं च मुद्गलाचार्यैः 'सुकृतिन ईषत्पापे प्रायश्चित्तं रघूत्तमप्रोक्तम् । अपयाति मामुदीक्ष्य प्रायस्तदपीह गौरिव व्याघ्रमिति ' । एतादृशानपि नरान् दूरीकर्तुं आचरितपापादुद्धर्तुं त्वमिव त्वत्सदृशी त्वमेव विजयसे अत्रोपमानोपमेयत्वं गंगाया । एव तत्फलं तु अन्या त्वत्सदृशी नास्तीति अतएवानन्वयालंकारः । तदुक्तम् 'उपमानोपमेयत्वं यदेकस्यैव वस्तुनः । इंदुरिंदुरिव श्रीमानित्यादौ तदनन्वय इति । प्रायश्चित्तशब्दे 'प्रायस्य चित्तिचित्तयो ' रिति पारस्करगणपठितसूत्रेण सुट्निष्पन्नः स च रूढ्या योगेन च पापनाशनसमर्थं विशेषधर्ममाचष्टे। प्रायश्चित्तशब्दश्चायं पापक्षयार्थे नैमित्तिके कर्मविशेषे रूढ इत्याहुः संप्रदायविदो निबंधकारादयः । योगस्त्वांगिरसा दर्शितः 'प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपोनिश्चयसंयुक्तं 'प्रायश्चित्तं तदुच्यते ' । अस्यार्थः अनुष्ठितेन द्वादशवार्षिकादिना अवश्यं पापं निवर्तेत इति विश्वासो निश्चयः तेन संयुक्तं वृथानुष्ठानलक्षणं तपः प्रायश्चित्तमित्यलं विस्तरेण ॥ १७ ॥

भा०—हे माता ! ब्याज खाने आदि हलके पाप करके और फेर तुरत पश्चात्ताप करनेवाले जो पापी मनुष्य, उनको शुद्ध करनेको त्रैलोक्यमें गोदावरी आदि बहुत तीर्थोंके समुदाय हैं, पर जिन-मनुष्योंके पापकर्मोंमें प्रायश्चित्त ( किये पाप दूर करनेके प्रकार ) का रस्ताही बिलकुल नहीं घुस

१ अंगिरा ऋषिने कहा है, 'प्राय शब्दका अर्थ तप ' और 'चित्तशब्दका, निश्चय' इतना व्रत वा तीथ सेवन करनेसे यह पाप जायगाही अवश्य ऐसा निश्चयपूर्वक जो तप वह प्रायश्चित्त कहलाता है॥

शक्ता, एसे पापियोंके पापोंको दूर करनेको तो तेरे सरीखी तूही है "दूसरा कोई भी नही" १७ ॥

इदानीमनेकगुणविशिष्टत्वेन पापहरणक्षमं तव वपुर्मम पापं नाशयतु इति प्रार्थयते--

अब अठारहवें १८ श्लोकमें, अनेक प्रकारके गुणवाली है, इसीसे पाप हरनेमें समर्थ ऐसी तेरी मूर्ति मेराभी पाप नाश करे ऐसी प्रार्थना करते हैं ॥

**निधानं धर्माणां, किमपि च विधानं नवमुदां;**
**प्रधानं तीर्थाना, ममलपरिधानं त्रिजगतः ॥**
**समाधानं बुद्धे, रथ खलु तिरोधानमधियां;**
**श्रियामाधानं नः परिहरतु तापं तव वपुः ॥१८॥**

**सं०–निधानमिति।** भो जननि ! धर्माणां वेदेन प्रयोजनमुद्दिश्य विधीयमानार्थानां । तदुक्तं जैमिनिना 'चोदनालक्षणार्थो धर्मः' तेषां निधानं स्थानं निधीयते स्थाप्यते यस्मिन्निति' धा धातोः 'करणाधिकरणयोश्चे' ति ल्युट् । च पुनः नवमुदां नवाश्च ताः मुदश्च तासां नूतनहर्षाणां किमपि विधानं जनकं गंगादर्शनेन विलक्षणा हर्षा जायंते इत्यनुभवसिद्धम् । 'कर्तृकर्मणो' रिति कर्मणि षष्ठी उभयत्र । च पुनस्तीर्थानां प्रधानं । च पुनः त्रिजगतः त्रयाणां जगतां समाहारः त्रिजगत् तस्य 'तद्धितार्थे' ति समाहारे द्विगुः । अमलपरिधानं अमलं निर्मलं च तत्परिधानं चामलपरिधानं अधोंऽशुकं 'अंतरीयोपसंव्यानपरिधानान्यधोंऽशुक इत्यमरः' । यथा लोके कस्यचिद्वसनहीनस्य न शोभा तथा एतद्विना त्रिजगतीत्याकूतम् । च पुनः बुद्धेर्मनीषायाः 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिरित्यमरः' समाधानं नानादुष्टकल्पनानाशकमित्यर्थः । अथानंतरम् अधियां निर्बुद्धीनां तिरोधानमपिधानं तेषामदृश्यमिति भावः । 'अपिधानतिरोधानपिधानाच्छादनानि चेत्यमरः' अथ श्रियां लक्ष्मीणामाधानं स्थापकम् मोक्षादिलक्ष्मीसंपादकमित्यर्थः ।

एतादृशगुणविशिष्टं तव वपुः शरीरं 'गात्रं वपुः संहननं शरीरमित्यमरः' नोऽस्माकं तापं परिहरतु ॥ १८ ॥

भा०—हे माता ! अमुक अमुक कर्म करनेसे अमुकअमुक फल होता है ऐसे वेद करके कहे भये जो कर्मा–नुष्ठान तिन आदि धर्मोंका ठिकाना और नये नये आनंदोंको उत्पन्न करनेका एक अद्भुत पदार्थ और सब तीर्थोंके बीचमें मुख्य और तीनों लोकोंका पहरनेका निर्मलवस्त्र और बुद्धिको समाधान ( अनेक दुष्ट कल्पनाओंको नाश ) करनेवाला और निर्बुद्धि ( मूर्ख ) लोगोंको न दीखनेवाला और मोक्ष आदि लक्ष्मियों (संपदाओं)को देनेवाला ऐसा जो तेरा देह ( मूर्ति ) वह हमारे तापोंको हरण करैं ॥ १८ ॥

इदानीं कार्यासक्ततया तस्यास्तव वियोगो जातः अयं ममैवापराध इत्याह—

अब उन्नीसवें १९ श्लोकमें कामके वश पड़जानेसे-तेरा वियोग भया, यह मेराही अपराध है पर तू क्षमा कर क्योंकि—तू मेरी माता है ऐसा कहते हैं.

**पुरो धावंधावं, द्रविणमदिराघूर्णितदृशां;**
**महीपानां नाना, तरुणतरखेदस्य नियतम् ॥**
**ममैवाऽयं मंतुः, स्वहितशतहंतुर्जडधियो;**
**वियोगस्ते मात, र्यदिह करुणातः क्षणमपि ॥१९॥**

सं०—पुर इति । भो मातः ! मातृत्वेनापराधः सोढव्य इत्याकूतं । एवं ममैव एवकारो निश्चयार्थः मंतुः अपराधः अस्तीति शेषः । कोऽसावित्याकांक्षायामाह । इह लोके तव वियोगः स्नानाद्यसंबंधः यत् अभूत् अतः कारणात् क्षणमपि क्षणमात्रमपि करुणा दया त्वया मयि कर्तव्येति शेषः । 'कारुण्यं करुणा घृणेत्यमरः' अपराधभवने मूलमाह । कथंभूतस्य मम द्रविणमदिराघूर्णितदृशां द्रविणमेव मदिरा उन्मादकारित्वात् यद्वा द्रविणं च मदिरा च ताभ्यां घूर्णिते घूर्णनयुक्ते भ्रमिते इत्यर्थः । तादृश्यौ दृशौ येषां ते 'दृग्दृष्टी चेत्यमरः' नाना अनेकेषां अव्ययत्वात् षष्ठ्यालुक् एतादृशानां महीपानां महीं पांति ते महीपाः राजानः तेषां अग्रे नियतमेव धावंधावं धावित्वा धावित्वा । धावु गतिशुद्ध्योरिति धातो 'राभीक्ष्ण्ये णमुलूचे' ति णमुलि द्वित्वं । तरु-

णतरखेदस्य अतिशयेन तरुणः तरुणतरः तादृशः खेदः श्रमो यस्य तस्य यद्वा नानातरुणतरखेदस्येत्येकं पदम् नाना अनेकविषयः तरुणतरः खेदो यस्य। पुनः कथंभूतस्य स्वहितशतहंतुः स्वस्यैव हितानि पथ्यानि तेषां शतं तस्य हंता नाशकः तस्य अतएव। पुनः कथंभूतस्य जडधियः जडा धीर्यस्य तस्य ॥ १९ ॥

भा०=हे माता! धनरूप मदिराकरके भ्रम-भूली दृष्टिवाले अनेक राजाओंके आगे निरंतर दौड़ दौड़ कर, नित-नवे श्रम-दुखवाला और सैकड़ों अपने भलोंका नुकसान करनेवाला, इसीवास्ते मूर्ख ऐसे मेराही यह अपराध है, कि—जो तेरा वियोग ( बिछोह ) भया; पर अब क्षण-मात्र मेरेपर दयाकर, 'क्योंकि—माताका धर्मही है' ॥ १९ ॥

पूर्वं दयाविधेयेत्युक्तं इदानीं किंविषयिणी दयेत्याकांक्षायां तव जलं मम पुनः भवनमेव दूरीकरोतु इति प्रार्थयते—

अब बीशवें २० श्लोकमें, जो पहले कहा कि—दया कर, सो यह, कि—तेरा जल मेरे वारंवार होते जन्म-मरणको दूर करे; ऐसा कहते हैं ॥

**मरुल्लीलालोल, लहरिलुलितांभोजपटली;-**
**स्खलत्पांसुव्रात, च्छुरणविसरत्कौंकुमरुचि ॥**
**सुरस्त्रीवक्षोज, क्षरदगरुजंबालजटिलं;**
**जलं ते जंबालं मम जननजालं जरयतु ॥ २० ॥**

सं०—मरुदिति। भो मातः! ते तव जलं मम जगन्नाथस्य जननजालं जननस्य जन्मनः। 'जनुर्जननजन्मानीत्यमरः'। तस्य जालं समूहः तत्। 'जालं समूह आनाय इत्यमरः'। जरयतु नाशयतु जॄ वयोहानौ स्वार्थे णिजंतः 'जनीजॄषिति' मित्वे 'मितां ह्रस्व' इत्युपधाह्रस्वः। कथंभूतं जलं मरुल्लीलालोललहरिलुलितांभोजपटलीस्खलत्पांसुव्रातच्छुरणविसरत्कौंकुमरुचि मरुतो वायोः लीला विलासः तेन लोलंत्यश्चंचला या लहर्यो वीचयः ताभिः लुलितानि लोलानि यानि अंभोजानि कमलानि तेषां पटली समूहः तस्याः स्खलंतः पतंतो ये पांसवः रजांसि तेषां व्रातः समूहः तस्य छुरणं अंगलेपः तेन विसरंती प्रसरणशीला तादृशी कौंकुमरुचिर्दीप्तिर्यस्य तत्। कमलरजःपतनेनात्यंतमारक्तमिति भावः। पुनः कथंभूतं सुरस्त्री-

वक्षोजक्षरदगरुजंबालजटिलं सुराणामिंद्रादिदेवानां स्त्रियः इंद्राण्यादयस्तासां वक्षोजाः स्तनास्तेभ्यः क्षरन् पतन् यः अगरुजंबालः कृष्णचंदनपंकः 'वंशिकागरुराजार्हेत्यमरः' 'निषद्वरस्तु जंबालः पंकोऽस्त्रीत्यमरः' तेन जटिलं सजटं । जटाशब्दात्तुदादित्वादिलच् । पुनः कथंभूतं जंवालं जंबालः पंकः अस्ति यस्मिन् तत् यद्वा जंबालः शैवालं अस्ति यस्मिन् यद्वा जंबालाः मदनद्रुमाः धत्तूरवृक्षा इत्यर्थः । ते संत्यस्मिन् तत् । तथा च कोशः 'जंबालः शैवाले पंकेऽजगले मदनद्रुम इति' । पक्षमयेऽपि जंबालशब्दान्मत्वर्थीयो अर्शआद्यच् । मरुल्लीलालोलल्लहरीत्यत्र संहितायां 'तोर्लि' ति लः । कौंकुमरुच्योः समासं कृत्वा पश्चाद्विसरंतीशब्देन समासे पुंवद्भावः । 'तालव्या अपि दंत्याश्च शंबुसूकरपांसवः' इति द्विरूपकोशात्तालव्योपि पांसुशब्दः ॥ २० ॥

भा०—हे माता ! वायुके खेलने ( चलने ) से चंचल ( हलचल करती ) लहरियोंके साथ हिलते कमलोंके समूहोंसे गिरते जे रज तिनके बहुत मिलनेसे फैलती, केसरकी कांतिवाला यानी कुछ कुछ लाल ऐसा और इंद्रादि देवोंकी स्त्रियोंके स्तनोंपरसे गिराभया जो कृष्णागरु ( काले अगरका ) कीच ( घिसा चंदन ) उसकरके जटाकी तटोंके तुल्य धारोंवाला, ऐसा जो शेवालसे युक्त तेरा जल; सो मेरे जन्ममरणसमुदायको नाश करे॥२०॥

इदानीमुत्पत्तिस्थाननिवासस्थानव्यापारसौष्ठवेन जगदपेक्षया तव उत्कर्षो वर्तते इत्याह—

अब इक्कीसवें २१ श्लोकमें, पैदा होनेकी जगह और रहनेकी जगह और काम, यह सब श्रेष्ठ होनेसे सारे जगत्में बड़ी तूही है; ऐसे कहते हैं ॥

**समुत्पत्तिः पद्मा, रमणपदपद्मामलनखा-**
**न्निवासः कंदर्प, प्रतिभटजटाजूटभवने ॥**
**अथायं व्यासंगो, हतपतितनिस्तारणविधौ;**
**न कस्मादुत्कर्ष, स्तव जननि जागर्तु जगतः ॥२१॥**

सं०—समुत्पत्तिरिति । भो जननि ! जगतः विश्वस्मात्तवोत्कर्षः आधिक्यं कस्माद्धेतोर्न जागर्तु नास्ताम् अपि तु सर्वस्माद्धेतोरुत्कर्षो वर्तत इत्यर्थः । उत्कर्षप्रतिपादकहेतूनाह—समुत्पत्तिरिति तव

समुत्पत्तिः सम्यगुत्पत्तिरुद्भवः पद्मारमणपदपद्मामलनखात् पद्मा-या लक्ष्म्या । 'लक्ष्मीः पद्मालया पद्मेत्यमरः' रमणः पतिः वि-ष्णुस्तस्य पदं चरणकमलं तस्यामलनखस्तस्माद्भवति 'जनिकर्तु'रित्यपादानत्वम् तव निवासः स्थितिः कंदर्पप्रतिभटजटाजूटभवने कंदर्पस्यानंगस्य 'कंदर्पो दर्पकोऽनंग इत्यमरः' प्रतिभटः प्रति-पक्षी शिवः तस्य जटाजूटः कपर्दः स एव भवनं गृहं तत्र वर्तत इति शेषः । अथानंतरं तवायं व्यासंग उद्योगः हतपतितनिस्तार-णविधौ हताः शत्रुभिः शस्त्रादिना मारिताः प्रायश्चित्तिनः तेषां निस्तारणमुद्धारस्तस्य विधिः करणं तत्र वर्तत इति शेषः । 'वि-धिर्विधाने दैवे चेत्यमरः' ॥ २१ ॥

भा०–हे माता ! लक्ष्मीपति भगवानके चरणकमलके नखमेंसे तौ उत्प-त्ति और कामदेवके शत्रु-महादेवजीकी जटाके जूड़े-रूप-घरमें निवास, ( रहना ) और यह; घायलहोके, मरेभयोंके और शुद्ध न होशकनेवालोंके उद्धारके करनेमें व्यापार, (उद्योग) ऐसा होके, किस-कारणसे तेरा सब-जग-तसे बड़प्पन न होवे ? किंतु होवेही ॥ २१ ॥

इदानीं हरशिरसि निवसंत्या विष्णुपदोद्भूतायास्तवोपमेया कापि नदी नास्तीत्याह—

अब बाईशवें २२ श्लोकमें श्रीमहादेवजीके माथेपर रहनेवाली और श्री-विष्णुजीके चरणसे निकलनेवाली तेरेसरीखी दूसरी कोईभी नदी नहीं है; ऐसा कहते हैं ॥

**नगेभ्यो यांतीनां, कथय तटिनीनां यतमया;**
**पुराणां संहर्तुः सुरधुनि कपर्दोऽधिरुरुहे ॥**
**कया च श्रीभर्तुः, पदकमलमक्षालि सलिलै-;**
**स्तुलालेशो यस्यां, तव जननि दीयेत कविभिः २२**

सं०–नगेभ्य इति । भो जननि ! कविभिः पंडितैः । 'संख्या-वान्पंडितः कविरित्यमरः' । तव तुलालेशः तुलाया उपमाया लेशो लवः 'लवलेशकणाणव इत्यमरः' । यस्यां दीयेत तादृशी का वर्तते । अपि तु न कापीत्यर्थः । ननु कृष्णादयो बह्वयो वर्तंते । इतिचेत्तत्राह । नगेभ्य इति । नगेभ्यः पर्वतेभ्यः । 'नगो-

ऽप्राणिष्वन्यतरस्या' मिति पाक्षिकप्रतिषेधान्नव्नो नलोपाभावः। यांतीनामागच्छंतीनां मध्ये। 'यतश्च निर्धारणमिति षष्ठी'। कतमया तटिन्या पुराणां नगराणां संहर्तुर्दाहकस्य शिवस्य कपर्दो जटाजूटः अधिरुरुहे अध्यारूढः। नगेभ्यो यांतीनां तटिनीनां मध्ये कया वा तटिन्या श्रीभर्तुर्विष्णोः पदकमलं चरणपंकजं सलिलैरक्षालि धौतमिति त्वं कथय। अर्थात् अस्मान्प्रति वद। एवं च तत्कार्यकारणाभावात् काप्युपमेया नेति भावः। इदमेव मनसि निधाय त्वामहं शरणं गत इत्याकूतं। अक्षालीत्यत्र 'चिणभावकर्मणो' रिति कर्मणि चिण्। आदौ पूर्वार्धं योजयित्वा पश्चादुत्तरार्धं योज्यम्॥ २२॥

भा०—हे देवनदी! पर्वतोंपरसे आनेवाली नदियोंमेंसे कौनसीने त्रिपुरके नाशक महादेवके जटाके जूड़ेमें आरोहण ( सवारी ) किया? अथवा किसने लक्ष्मीके स्वामी-विष्णुके चरणकमलको जलोंकरके धोया? कि—जिसको कवियोनें तुम्हारी उपमाका लेश ( कुछभाग ) भी देना सो हे जननि! कह॥ २२॥

इदानीमेवं जननि! मनोरथदायिनि त्वयि सत्यां ब्रह्मादीनां प्रयोजनमेव नास्तीत्याह—

अब तेईशवें २३ श्लोकमें हे माता! मनोरथ ( इच्छा किया भया ) देनेवाली तेरेको होते संते ब्रह्मादि-देवोंका कामही नहीं है; ऐसा कहते हैं॥

**विधत्तां निःशंकं, निरवधिसमाधिं विधिरहो;**
**सुखं शेषे शेतां, हरिरविरतं नृत्यतु हरः॥**
**कृतं प्रायश्चित्तैरलमथ तपोदानयजनैः;**
**सवित्री कामानां, यदि जगति जागर्ति भवति२३**

सं०—विधत्तामिति। भो जननि! जनयति विश्वमुत्पादयति इति जननी विश्वमाता तत्संबोधनं। जगति विश्वस्मिन् कामानां मनोरथानां। कर्मणि षष्ठी। सवित्री उत्पादयित्री यदि जननी विश्वमाता त्वं जागर्ति अस्ति तर्हि विधिः विदधाति विश्वमिति विधिर्ब्रह्मा विधात्रो वेधा चेति वेधादेशोसिप्रत्ययश्च। निरवधिसमाधिं निर्गतः अवधिर्यमादिरूपा मर्यादा यस्य तादृशो यः समा-

धिश्चित्तवृत्तिनिरोधस्तं निःशंकं निर्गता शंका यस्मिन् कर्मणि यथा भवति तथा मयि निर्व्यापारे जगदुत्पत्तिः कथं भविष्यतीति शंकारहितमित्यर्थः । विधत्तां करोतु हरिः । हरति सर्वेषां दुःखमिति हरिः 'अचइरि' त्यौणादिको इः शेषे सुखं यथा स्यात्तथा शेताम् निद्रां करोतु । सुखमित्यनेन निद्राभंगजनको जगद्रक्षणरूपोपाधिर्मास्त्विति सूचितम् । हरः हरति विश्वमिति हरः पचाद्यच् शिवः अविरतं निरंतरं यथा स्यात्तथा नृत्यतु नृत्यं करोतु । अविरतमित्यनेन मध्ये कार्यांतरचित्ततया नृत्यविरामो मास्त्विति सूचितं । प्रायश्चित्तैः कृतं स्वहस्तेन शुद्धिकरणाभावानि व्यर्थानीति भावः । अथानंतरं तपोदानयजनैः तपांसि कृच्छ्रचांद्रायणादीनि दानानि गजाश्वादीनि यजनानि देवपूजनयागादीनि तैरलम् तैः साध्यं नास्तीति भावः । गम्यमानक्रियां प्रतिकारकत्वात्तृतीया । अहो इत्याश्चर्ये । अनेकेषां कार्यमेकैव त्वं करोषीत्याश्चर्यम् ॥ २३ ॥

भा०–हे माता! जो जगतमें कामनाओंको पूर्ण करनेवाली आप जागती हो, तो ब्रह्मा वख्तकी मर्यादा न राखते या चाहो तबतक समाधि करें, 'उत्पत्तिकी कुछभी फिकर, न रक्खें' और विष्णु शेष-नागपर सुखसे सोवें 'जगतपालनकी चिंता कुछभी न करें' और महादेव; सदा नाचाही करें, 'कोईभी चिंतासे बंद न करें' और प्रायश्चित्त तो सब "करचुके" यानी 'अपनेसे शुद्ध न होनेके कारण चुप बैठगये एकतरफ' और तप, दान और यज्ञ पूजन इन्हों करकेभी 'बश है' इन्हों-करके कुछ सधे ऐसा नहीं है; अब ऐसा अनेक लोगोंका काम अकेलीही तू करती है यह आश्चर्य है ॥ २३ ॥

इदानीं अनाथ इत्यादिविशेषणयुक्तोऽहं स्नेहार्द्रामित्यादिविशेषणयुक्तां त्वां प्राप्तोऽस्मि अतस्त्वं स्वमहत्त्वयोग्यं कुर्वित्याह—

अब चौबीसवें २४ श्लोकमें अनाथ-आदि गुणवाला मैं तेरे शरण आया हूं इसवास्ते तू अपने महिमा-लायक कर. ऐसा कहते हैं.

**अनाथः स्नेहार्द्रां, विगलितगतिः पुण्यगतिदां;**

**पतन् विश्वोद्धर्त्रीं, गदविगलितः स्निद्धभिषजम् ॥**
**सुधासिंधुं तृष्णाकुलितहृदयो मातरमयं;**
**शिशुः संप्राप्तस्त्वा,महमिह विदध्याःसमुचितम् २४**

सं०—अनाथ इति। भो गंगे! अय महं शिशुः श्यति दिने दिने कृशो भवतीति शिशुः शावकः। 'शःकित्सन्वच्चे' त्युणादिसूत्रेण साधुः 'पृथुकः शिशुरित्यमरः' मातरं जननीं त्वां प्राप्तोऽस्मि। इह विषये त्वं समुचितं सम्यगुचितं योग्यं विदध्याः कुरु। शरणागतबालं मां मातृत्वान्मा त्यजेति भावः। कीदृशोऽहं अनाथः दीनः स्वाम्यंतराभाववानित्यर्थः। पुनः कीदृशीं त्वां स्नेहार्द्रां स्नेहेन प्रीत्या आर्द्रां क्लिन्नां 'आर्द्रं सांद्रं क्लिन्नमित्यमरः' पुनः कीदृशोऽहं विगलितगतिः विगलिता नष्टा गतिर्गमनं यस्य सः यद्वा विगलिता पापबाहुल्येन नष्टा गतिः पुण्यलोके गतिर्गमनं यस्य सः। पुनः कीदृशीं त्वां पुण्यगतिदां पुण्येषु गतिस्तां ददाति सा तां। यद्वा पुण्येषु पुण्यलोकेषु गतिदां। पुनः कथंभूतः पतन् पतितः। पु० विश्वोद्धर्त्रीं उद्धारकर्त्रीं त्रिभुवनविधातुश्च कलहइतिवत् शेषषष्ठ्या समासः। एवं च विश्वांतर्गतस्य ममोद्धारं करिष्यस्येवेति भावः। पुनः कथंभूतः गदविगलितः गदैः आतंकैः रोगैरित्यर्थः विगलितः विशेषेण गलितः जर्जरितः। 'यक्ष्मातंकगदाबाधाः शब्दाः पर्यायवाचका इति'। पु० सिद्धाभिषजं सिद्धौषधदां सिद्धवैद्यरूपामित्यर्थः। 'रोगहार्यगदंकारो भिषग्वैद्यो चिकित्सक इत्यमरः' पुनः कथंभूतः तृष्णाकुलितहृदयः तृष्णया पिपासया आकुलितं व्याप्तं हृदयं यस्य सः। पुनः कथंभूतां सुधासिंधुं सुधाया अमृतस्य सिंधुं समुद्रं यद्वा सुधायाः सिंधुं देशं यद्वा सुधायाः सिंधुं नदीं। तथाचामरः 'देशे नदविशेषेऽब्धौ सिंधुर्ना सरिति स्त्रियामिति'। अत्र परिकरालंकारः साभिप्रायविशेषणानां सत्वात्। तदुक्तं कुवलयानंदे। 'अलंकारः परिकरः साभिप्राये विशेषणे इति' ॥ २४ ॥

भा०—हे गंगा! यह मैं बालक तेरे माताके पास आया हूं, सों इस

वालकपै तू माके लायक कृपा कर. क्योंकि,–यह[1] अनाथ (गरीव) है और तू स्नेहसे पूर्ण है. । यह सद्गतिहीन है, और तू पुण्यवाली गतिको देनेवाली है । यह पतित ( महापापी ) है और तू विश्वको उद्धार करनेवाली है । यह 'भव' रोगग्रस्त है और तू सिद्ध-औषधि है । यह प्याससे घबराया भया है और तू अमृतकी नदी है । ऐसे मेरे प्रत्येक दोष दूर करनेको तू वैसै वैसै गुण-संयुक्त है इसीसे मै तेरे शरण आया हूं तू उद्धार कर ॥ २४ ॥

इदानीं यदारभ्य तव कथा भूलोकमागता तदारभ्य यमनगरकोलाहल: शांत: तद्दूता अपि दूरदेशं गता: विमानसंघश्च देववीथीर्विदलयतीत्याह—

अब पचीशवें २५ श्लोकमें तेरी कथा जबसे पृथ्वीपर आई तवसे यमके नगरमेंका कोलाहल वंद भया और यम-दूतभी दूर चले गये और विमानोंका झुंड देवोंके मार्गोंको खोदता है ऐसे कहते हैं.

**विलीनो वै वैवस्वतनगरकोलाहलभरो;**
**गता दूता दूरं, क्वचिदपि परेतान्मृगयितुम् ॥**
**विमानानां व्रातो, विदलयति वीथीर्दिविषदां;**
**कथा ते कल्याणी, यदवधि महीमंडलमगात् २५**

**सं०–विलीन इति** । भो जननि! यदवधि यदारभ्य ते तव कल्याणी कल्याणकारिका कथा महीमंडलमगात् 'इणो गालुङीति' गादेशे 'गातिस्थेति' सिचो लुक् । तदारभ्य वैवस्वतनगरकोलाहलभर: वैवस्वतस्यांऽतकस्य । 'वैवस्वतोंऽतक इत्यमर:' । नगरं पुरं तत्र कोलाहलभर: कलकलसमूह: । 'कोलाहल: कलकल इत्यमर: ' । विलीन: विशेषेण लीन: गुप्त: अभूदिति शेष: । विशेषश्च कस्मिन्नपि काले ईषदपि नास्तीति । पूर्वं तत्र पापिगमनेन तेषां ताडनात् कोलाहलस्थिति: । इदानीं तु त्वत्कथाश्रवणमाहात्म्येन पापाभावात् कस्यापि तत्र गमनाभावेन ताडनाद्यभाव इति भाव: । दूता अपि अर्थाद्यमसंदेशहारका अपि । 'सा-

---

[1] प्रत्यक्ष अपनेको [ यह ] ऐसा बोलना दीनता बतानेके वास्ते है ॥

त्संदेशहरो दूत इत्यमरः ' । क्वचिद्देशे परेतान् शवान्मृगयितुं अन्वेषितुं दूरं गताः यस्मिन् देशे त्वत्कथाश्रवणं नास्ति तत्र गता इत्यर्थः । ननु यमनगरगमनाभावे त्वत्कथाश्रवणिनः कुत्र गच्छंतीति चेत्तत्राह । विमानानां विशिष्टं आनयंति ये ते । विगतं मानं वा येषां ते विमानाः व्योमयानानि 'व्योमयानं विमानोस्त्रीत्यमरः ' । तेषां व्रातो निकरः ' स्तोमौघनिकरव्रातेत्यमरः ' दिविषदां दिवि सीदंति ते दिविषदो देवास्तेषां ' शद्लृविशरणगत्यवसादनेष्विति ' धातोः ' सत्सूद्विषेति ' क्विप् ' हृद्युभ्यां चेति ' ङेरलुक् । ' सुषामादित्वात् ' षत्वं वीथीः मार्गान् देवगमनमार्गानित्यर्थः । विदलयति विशेषेण दलयति विदारयति । त्वत्कथाश्रवणमाहात्म्येन सर्वेषां विमानैर्गमनाद्वारंवारं विमानसंबंधात् खनितानिव करोतीत्यर्थः ॥ २५ ॥

भा०—हे माता ! जबसे लगाके, तेरी कल्याण करनेवाली कथा पृथ्वीके ऊपर आई तबसे लगाके, यमराजकी नगरीमें जो पापियोंके मारपीट करनेके कोलाहलोंका समूह (होताथा) सो तमाम गुप्त होगया और यमके दूतभी, मरेभये प्राणियोंको ढूंढ़नेके लिये दूर-देश चले गये, यानी जहां तेरी कथा नहीं है उहां गये और ' तेरी कथाश्रवण आदि करनेवाले लोकोंको मिलेभये, विमानोंके थोकके थोक, सारे देवोंके मार्गको जानेआनेसे तोड़ फोड़ करने लग गये ॥ २५ ॥

इदानीं तव जलकणाः कामक्रोधजनितज्वरदग्धशरीरिणामस्माकं संतापशमनं कुर्वंत्विति प्रार्थयते—

अब छब्बीशवें २६ श्लोकमें तेरे जलके बिन्दु; काम-क्रोध-आदिकोंसे भयेहुए-ज्वरकरके जले-शरीरवाले ऐसे हमारे संतापका नाश करें; ऐसी प्रार्थना करते हैं. ॥

**स्फुरत्कामक्रोध,प्रबलतरसंजातजटिल;**
**ज्वरज्वालाजाल,-ज्वलितवपुषां नः प्रतिदिनम्**
**हरंतां संतापं, कमपि मरुदुल्लासलहरी;**
**छटाश्चंचत्पाथःकणसरणयो दिव्यसरितः ॥२६॥**

सं०–स्फुरदिति ! दिव्यसरितः दिवि आकाशे भवा दिव्या । भवार्थे दिगादित्वाद्यत् । सा चासौ सरिच्च तस्या गंगायाः मरुदुल्लासलहरीछटाश्चंचलत्पाथःकणसरणयः मरुतो वायोरुल्लासः संबंधो गमनं वा लससंश्लेषणगमनयोरिति धातोर्भावे घञ् । तेन या लहर्यस्तासां याश्छटाः परंपरास्ताभिश्चंचदुद्दधत् यत्पाथः उदकं 'कबंधमुदकं पाथ इत्यमरः' तस्य कणास्तुषारास्तेषां सरणयः पंक्तयः नोऽस्माकं कमपि औषधादिभिरसाध्यतया अपहर्तुमशक्यमपि संतापं हरंतां नाशयंतु । कथंभूतानां नः प्रतिदिनं दिनेदिने इति प्रतिदिनं । 'अव्ययं विभक्ति' इति सूत्रे योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानीति चत्वारो यथाशब्दार्थो उक्ताः तत्र वीप्सायामव्ययीभावः । स्फुरत्कामक्रोधप्रवलतरसंजातजटिलज्वरज्वालाजालज्वलितवपुषां कामोऽभिलाषः स्मरश्च । 'कामोऽभिलाषस्तर्षश्च' 'कामः पंचशरः स्मर इत्युभयत्रामरः' क्रोधोऽमर्षः । कोपक्रोधामर्षरोष इत्यमरः' स्फुरंतौ देदीप्यमानौ च तौ कामक्रोधौ च ताभ्यां प्रवलतरमतिशयितं संजात उत्पन्नोऽतएव जटिलः शिखावानेतादृशो यो ज्वरस्तस्य ज्वालाः अर्चयस्तासां जालं समूहस्तेन ज्वलितं दग्धं तादृशं वपुः शरीरं येषां तेषाम् ॥ २६ ॥

भा०–देवोंकी नदी ( गंगा )के वायुके चलनेसे उत्पन्न भयी लहरियोंमेंसे उड़ते जलके छीटोंके जो समूह; सो अत्यंत प्रवल ऐसे कामक्रोधोंकरके भया जो बड़ा-भारी भड़कताहुआ ज्वर उसकी लपटोंके समूहसे जले शरीरवाले हमारे औषधादिकोंकरकेभी न जानेवाले संतापगको हररोज नाश करें ॥ २६ ॥

पूर्वं जलकणाः संतापं हरंतामित्युक्तम् इदानीं तापबाहुल्यात्कणानां कथं तत्संभवतीति चेत् तव जलानां संघातोऽस्माकं तापशमनं करोत्विति प्रार्थयते—

अव पहले जो कहा कि–मेरे ताप जलबिंदु, हरें. पर बहुत भारी ताप है सो उनसे न हराजायगा ऐसा समुझके, फेर सत्तावीश २७ वें, श्लोकमें तेरे जलोंके समूह मेरे संताप हरें; ऐसा कहते हैं. ॥

**इदं हि ब्रह्मांडं, सकलभुवनाभोगभवनं;**
**तरंगैर्यस्यांत, र्लुठति परितस्तिंदुकमिव ॥**
**स एष श्रीकंठ, प्रविततजटाजूटजटिलो;**
**जलानां संघात, स्तव जननि तापं हरतु नः ॥२७॥**

सं०—इदमिति । भो जननि श्रीकंठप्रविततजटाजूटजटिलः प्रवितततो विस्तृतः स चासौ जटाजूटश्च श्रीकंठस्य प्रविततजटाजूटस्तेन जटिलः सजट एतादृशः स एषः तव जलानां संघातः समुदायः नोऽस्माकं तापं हरतु । स कः यस्य जलानां संघातस्यांत-र्मध्ये सकलभुवनाभोगभवनम् सकलभुवनानां चतुर्दशभुवनानां आ-समंतात् भोगः सुखं 'भोगः सुखे स्त्र्यादिभृताविल्यमरः' यद्वा सकलभुवनानामाभोगः परिपूर्णता 'आभोगः परिपूर्णतेत्यमरः' । तस्य भवनं गृहम् एतादृशमिदं ब्रह्मांडं तरंगैः सह । 'सहयुक्तेऽप्रधाने' इति सूत्रेण तृतीया । परितस्तिंदुकमिव तिंदुकस्य फलं तिंदुकम् । 'तिंदुकः स्फूर्जक इत्यमरः' 'तेंबुर्णी' इति भाषायां प्रसिद्धिः । लुठति लुठसंश्लेषणे तुदादिः । हीति आश्चर्ये । यस्मिंश्चतुर्दशभुवनाधार-ब्रह्मांडमपि स्थितं सोऽपि शिवकपर्दे स्थित इत्याश्चर्यम् । अत्रोत्तरो-त्तरमुत्कर्षस्य सत्त्वात् सारालंकारः तदुक्तम् अप्पय्यदीक्षितैः कुव-लयानंदे । 'उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयत' इति ॥ २७॥

भा०—हे माता ! शिवजीके विशाल जटाके जूड़ेकरके मानों जटासहित हो, ऐसा और चौदह लोकोंका सुख-भोग-स्थान, ऐसा यह ब्रह्मांड जिसके भीतर मारे लहरोंके इधरका-उधर टैमरूके फलके नाईं लुढ़कता-फिरता है ऐसा जो यह तेरे जलोंका समुदाय, सो हमारे संतापको हरे. ॥ २७ ॥

इदानीं ननु रे तीर्थांतराणि शिवादिदेवांश्च विहाय मामेव किं स्तौषीति चेत्तीर्थानि मदुद्धरणविधौ लज्जंते शिवादयश्च कर्णे हस्तं स्थापयंति । त्वं तु मातृत्वेन दयया मां पुनाना तेषां पापना-शनाभिमानं नाशयसीत्याह—

अब अठाईश २८ वें श्लोकमें, अरे ! दूसरे तीर्थ और शिव आदि देवोंको छोड़, मेरीही स्तुति क्यों करता है ? ऐसा कहेगी, तो सब तीर्थ

मेरे उद्धार करनेको लज्जा पाते हैं और शिव-आदि देवभी कानपर हाथ रखते हैं ( हमसे नहीं होता ऐसा बताते हैं ) और तू तौ माता-भावसे दया करके, मेरा उद्धार करके, उन्होंका " हम पापनाश करते हैं " ऐसा अभिमान नाश करती है; ऐसा कहते हैं ॥

**त्रपंते तीर्थानि, त्वरितमिह यस्योद्धृतिविधौ;**
**करं कर्णे कुर्वं, त्यपि किल कपालिप्रभृतयः ॥**
**इमं तं मामंब, त्वमियमनुकंपार्द्रहृदये, पुना-**
**ना सर्वेषामघमथनदर्पं दलयसि ॥ २८ ॥**

**सं०—त्रपंत इति** । भो अनुकंपार्द्रहृदये अंब ! अनुकंपा दया तया आर्द्रं हृदयं यस्याः सा तत्संबोधनम् एतादृशि अंब जननि ! अंबत्वेन त्यागानर्हता । तं इमं तव समीपे वर्तमानं मां जगन्नाथं पुनाना पुनाति तच्छीला । तच्छील्ये शानच् । पवित्रीकुर्वाणा इयं त्वं तेषां तीर्थादीनां अघमथनदर्पं अघस्य पापस्य मथनं नाशनं तस्य दर्पः गर्वस्तं दलयसि विदारयसि नाशयसीत्यर्थः । एताव-त्कालपर्यन्तं तेषां परमगर्वः स्थितः वयं सर्वेषां पापनाशनं कुर्म इति । इदानीं तु मम परमपातकिनः तद्धस्तेन उद्धारणाभावात् त्वया उद्धरणस्य कृतत्वात् तेषां गर्वो गत इति भावः । ननु तेषां हस्तेन किमित्युद्धरणं न भवतीति चेत्तत्राह । तं कम् इह यस्य उद्धृतिविधौ उद्धृतेः विधिः करणं तत्र 'विधिर्विधाने दैवे चेत्यमरः' तीर्थानि गोदावर्यादीनि त्वरितं यथा स्यात्तथा । महापातकिनो मम दर्शनसमय एवेति भावः । त्रपंते लज्जितानि भवंति स्वह-स्तेन महापातकिनो ममोद्धरणाभावाल्लज्जेति भावः । पुनस्तं कम् यस्योद्धरणविधौ कपालिप्रभृतयोऽपि कपाली प्रभृतिरादिर्येषां ते विष्णवादयोऽपि कर्णे हस्तं कुर्वंति स्थापयंतीत्यर्थः । स्वहस्तेन एत-स्योद्धृत्यभावात् एतस्य किमपि न श्रोतव्यमित्याशयेन कर्णे हस्त-न्यास इति भावः । करं कर्णे इत्येकवचनं तु द्वितीयकर्णेन श्रोत-व्यम् यद्वि स्वहस्तेन एतदीयं कार्यं भविष्यति चेत्करिष्यामः नो-चेन्नेत्येतदर्थबोधनाय ॥ २८ ॥

भा०–हे दयावान्-हृदयवाली माता! इस लोकमें जिस मेरे उद्धार करनेमें; गोदावरी-आदि तीर्थ तुरत लाज पाते हैं ( क्या करना? हमसे इसका उद्धार न हो शका ऐसे ) और महादेवजी-आदि देवभी कानपै हाथ रखते हैं, ऐसे यह ( आगे आये भये ) मेरेको पवित्र करती ऐसी यह तू; उन तीर्थ और देवोंका, 'हम पाप नाश करते हैं' ऐसे अभिमानको नाश करती है. ॥ २८ ॥

इदानीं अपरिमितसंशयेन पापाचरणान्निवृत्तैश्चांडालानां समूहैरपि त्यक्तानां पापानामाकरैः युतं मां पुनातुं यत्नं कुर्वत्यास्तव स्तुतिं कर्तुं नरपशुरहं कथं शक्नुयामित्यहंकारपरिहरणव्याजेनाह–

अब उन्तीशवें २९ श्लोकमें, भारी संशयकरके पाप करनेसें बंद पड़े ऐसे चांडालोंके समुदायोंकरके भी त्याग कियेभये पापोंके समूहसे भरपूर, ऐसे मेरे उद्धार करनेके वास्ते त्यार-भयी तेरी स्तुति करनेको मैं अज्ञानी कैसे शकूं? ऐसा कहते हैं ॥

**श्वपाकानां व्रातै, रमितविचिकित्साविचलितै; र्विमुक्तानामेकं, किल सदनमेनःपरिषदाम् ॥ अहो मामुद्धर्तुं, जननि घटयंत्याः परिकरं; तव श्लाघां कर्तुं, कथमिव समर्थो नरपशुः ॥ २९ ॥**

सं०–श्वपाकानामिति।हे जननि! मामुद्धर्तुं परिकरं कटिबंधं विवेकमारंभं यत्नं वा। 'प्रगाढगात्रैकबंधे विवेकारंभयोरिति विश्वः'। 'यत्नारंभौ परिकराविति त्रिकांडशेषः'। घटयंत्याः कुर्वन्त्यास्तव श्लाघां स्तुतिं कर्तुं नरः पशुरिवेति व्याघ्रादित्वात्समासः। सर्वान् विशेषेण पश्यतीति पशुः हिताहितज्ञानशून्यः मूर्ख इति यावत्। एतादृशोऽहं कथमिव केनापि प्रकारेण समर्थः अपि तु न कथमपीत्यर्थः। मन्मतिमांद्यात्तव गुणानामपारत्वाच्चेति भावः। अहो इत्याश्चर्ये परमपातकिनं मां पुनातुं यत्नादिकं करोषीत्याश्चर्यम्। कथंभूतं माम् अमितविचिकित्साविचलितैः अमिता अपरिमिता बह्वीत्यर्थः सा चासौ विचिकित्सा च इतः परं पातकानि

कर्तव्यानि वा नवेत्याकारः संशयः। 'विचिकित्सा तु संशय इत्यमरः'। यद्वा विचिकित्सा जुगुप्साख्यो बीभत्सरसस्थायीभावः। कितसंशय इति धातो 'गुप्तिज्किद्भ्य' इति सनि 'सन्यङो' रिति द्वित्वे 'गुरोश्च हल' इत्यप्रत्यये टाप्। अमितविचिकित्साया-श्चलितैः पातकान्निवृत्तैः एतादृशैः श्वपाकानां श्वानं पचंति ते श्वपाकाश्चाण्डालाः। यद्यपि पचादिगणे श्वपचेति अजंते निपातितम् तथापि न्यंक्वादिगणे श्वपाकशब्दस्य पाठात्पक्षे कर्मण्यपि कुत्वम्। 'निषादश्वपचावंतेवासिचांडालपुल्कसा इत्यमरः' तेषां व्रातैः समूहैः। नत्वेकेन द्वाभ्यां वा विमुक्तानां विशेषण मुक्तानां विशेषतश्च मनःपूर्वकत्यक्तानां न तु लोकलज्जयेति॥ एतादृशीनामेनःपरिषदां एनसां पापानां परिषदः सभाः समूहा इत्यर्थः। तासामेकमद्वितीयं सदनं गृहं किल निश्चयेन प्रसिद्धौ वा आश्चर्ये वा एतादृशमपि पापिनं पुनातुं उद्युक्तासीत्याश्चर्यम्॥ २९॥

भा०—हे माता! अपार संशयोंकरके 'पापोंसें' निवृत्त भये ऐसे चाण्डालोंके समूहनेंभी जिन्होंका परित्याग किया ऐसे पापोंके मंडलकी सभावोंके 'भरनेका' घर जो मैं, तिसको उद्धार करनेको कमर बांधकर, तयार-भयी-हुयी ऐसी तेरी स्तुति करनेको पशु-तुल्य मैं, कैसा समर्थ होऊं? "कभीही न होऊं" यह तो आश्चर्यही है कि—ऐसे मुझको तू उद्धारती है.॥ १९॥

इदानीं कस्यचिन्महापातकिनः समुद्धरणेन जगत आश्चर्यं संपादनीयमिति तव महतीच्छा स्थिता सा एतावत्कालपर्यंतं तादृशस्य कस्यचित्पातकिनोऽभावान्नैव पूर्णा अहं तु तादृशेच्छां सफलीकर्तुं प्राप्तोऽस्मि। अतो ममोद्धरणेन स्वेच्छासाफल्यं कुर्विति प्रार्थयते—

अब तीशवें ३० श्लोकमें, कोईभी महापापीका उद्धार करके, सारे जगत्को आश्चर्य करूं ऐसी बहुत दिनोंसे तेरे मनमें इच्छा थी, सो आजतक कोई न मिलनेसे पूरी न भयी, अब मैं तेरी वैसी इच्छाको पूरी करनेको आया हूं. अब तू मेरा उद्धार करके, अपनी इच्छा पूरी कर. ऐसी प्रार्थना करते हैं॥

**न कोऽप्येतावंतं, खलु समयमारभ्य मिलि-तो; यदुद्धारादारा, द्भवति जगतो विस्मय-भरः ॥ इतीमामीहां ते, मनसि चिरकालं स्थितवतीमयं संप्राप्तोऽहं, सफलयितुमंब प्र-णय नः ॥ ३० ॥**

**सं०**—नेति । भो अंब ! एतावंतं समयमारभ्य एतावत्कालपर्यंतं कोऽपि कश्चन पातकी न मिलितो न प्राप्तः । मयेति शेषः । आरात् यदुद्धारात् यस्योद्धारस्तस्मात् जगतो विस्मयभरः भवतीति ते मन-सि चिरकालं बहुकालं स्थितवतीं तिष्ठतीति स्थितवती तामिमां पूर्वो-क्तामीहामिच्छां सफलयितुं असफला सफला भवति तथा कर्तुम् । भृशादित्वात् 'क्यङ्मानिनोश्चे' तिपुंस्त्वम् तुमुन् । अयमहं जग-न्नाथः संप्राप्तः अस्मीति शेषः । नोऽस्मान्प्रणय पापं निरस्योत्तमां गतिं नयेत्यर्थः । 'उपसर्गादसमासेपी' ति णत्वम् । अंबेत्यनेन तव जननीत्वं चेदहं तव पुत्रः । एवं च मातुरिच्छा सत्पुत्रेण मया सफलीकर्तव्येति सत्पुत्रधर्म एवायमिति सूचितम् ॥ ३० ॥

**भा०**—हे माता ! आज-पर्यंत कोईभी पापी मेरेको नहीं मिला कि जि-सके उद्धार करनेसे बहुत कालतक जगत्को बहुतसा आश्चर्य होवै. ऐसी यह इच्छा तेरे मनमें बहुत दिनोंसे रही है; उसको सफल करनेको यह मैं आया हूं अब तू पाप दूर करके, मेरेको अच्छी गति दे ॥ ३० ॥

इदानीं ममानेकदुष्टगुणान् श्रुत्वा त्वां विना अन्यः कश्चन मम मुखनिरीक्षणमपि न कुर्यादित्याह—

अब इकतीश ३१ वें श्लोकमें मेरे अनेक दुर्गुणोंको सुनकर, तेरे बिन कौन ऐसा है कि– मेरा मुखभी देखै ? ऐसा कहते हैं. ॥

**श्ववृत्तिव्यासंगो, नियतमथ मिथ्याप्रलपनं; कुतर्केष्वभ्यासः, सततपरपैशून्यमननम् ॥ अपि श्रावंश्रावं, मम तु पुनरेवं गुणगणा;-न्ऋते त्वत्कोनाम, क्षणमपि निरीक्षेत वदनम् ॥ ३१ ॥**

**सं०**—श्ववृत्तीति । भो मातः ! श्ववृत्तिव्यासंगः शुनो वृत्तिरित-

स्ततो भ्रमणोच्छिष्टभक्षणाचरणादिस्तद्वत्व्यासंग उद्योगः । मया कृत इति शेषः। अथानंतरं नियतं नियमेन मिथ्या प्रलपनं असत्यानर्थकमपि भाषणं कृतं । 'प्रलापोनर्थकं वच इत्यमरः' । परमपुण्यशीलेन युधिष्ठिरेण सकृन्मिथ्योक्तमिति तज्जन्यपापवशादंतरिक्षगस्तद्रथो भूमौ लग्न इति स्पष्टं महाभारते । मया तु सत्यत्यागपूर्वकं सर्वदैव तत्कृतमिति मत्पापसंख्यैव न इत्याकूतम्। कुतर्केषु यद्वा कुत्सितानां परस्त्रीगमनपरगृहहरणादिरूपकर्मणां तर्का ऊहास्तेषु कुत्सिताश्च ते तर्काश्च तेषु यद्वा साक्षाद्ब्रह्मविद्याया अप्रतिपादकत्वेन परजयेच्छया च कुत्सितास्तर्कास्तर्कशास्त्रग्रंथास्तेष्वभ्यासोऽपि कृतः । सततपरपैशून्यमननं पिशुनस्य सूचकस्य भावः पैशून्यं द्वैजिह्वयं परेषां पैशून्यं तस्य मननं चिन्तनम् अभ्यासमिति यावत् सततं निरंतरं च तत् पैशून्यमननं च तदपि कृतम् । एवं प्रकारेण मम तु पुनर्गुणगणान् श्रावंश्रावं श्रुत्वाश्रुत्वा त्वदृते त्वां विना 'अन्यारादिति' सूत्रेण ऋतेयोगे त्वदिति पंचमी । को नाम क्षणमपि वदनं अर्थान्मम मुखं निरीक्षेत पश्येत् अपि तु न कोऽपीत्यर्थः । तव तु मातृत्वे दयाबाहुल्यादीदृशस्य मम मुखनिरीक्षणमावश्यकमेवेति भावः । तदुक्तं श्रीमच्छंकराचार्यैः । "कुपुत्रो जायेत क्वचिदपि कुमाता न भवतीति" ॥ ३१ ॥

भा०–हे माता ! घर घर दौड़ना और जूंठा खाना इत्यादि कुत्तेके व्यापार और निरंतर खोटा और अनर्थक बोलना और खराब कल्पनाएं करनेमें लगेरहना और निरंतर दूसरोंकी चुगली-चाड़िऐं चिंतन करना, ऐसे ऐसे मेरे दुर्गुणोंको वारंवार सुनके, तेरेविना दूसरा कौन मेरा क्षणभरभी मुह देखेगा ! 'कोईभी नही' "तूही माताके स्नेहसे देखती है" ॥ ३१ ॥

इदानीं यस्य मनुष्यस्य नेत्राभ्यां परमरमणीयं तव शरीरं न दृष्टं । यस्य च कर्णाभ्यां तव लहरिकोलाहलश्च न श्रुतस्तस्य नेत्रे व्यर्थे कर्णौ च व्यर्थावित्याह—

अब बत्तीश ३२ वें श्लोकमें, जिस मनुष्यके नेत्रोंकरके खूब सुंदर तेरे स्वरूपके दर्शन न किये गये और जिसके कानोंसे तेरी लहरियोंका कोलाहल न सुनागया. उसके नेत्र और कान विफल हैं ! ऐसा कहते हैं ॥

विशालाभ्यामाभ्यां, किमिह नयनाभ्यां खलु फलं;
न याभ्यामालीढा, परमरमणीया तव तनुः ॥
अयं हि न्यक्कारो, जननि मनुजस्य श्रवणयो-;
र्ययोर्नांतर्यात, स्तव लहरिलीलाकलकलः ॥ ३२ ॥

सं०—विशालाभ्यामिति । अत्र यस्य तस्येत्यध्याहारः । भो जननि! यस्य मनुजस्य मानवस्य 'मनुजा मानवा नरा इत्यमरः' याभ्यां नेत्राभ्यां परमरमणीया अतिसुंदरी । अनेन दर्शने कारणं सूचितम् एतादृशी तव तनुः शरीरं न आलीढा न सादरमवलोकिता तस्य मनुजस्य विशालाभ्यां आकर्णविस्तृताभ्यां आभ्यां नयनाभ्यां कृत्वा इह भूलोके किं फलं न किमपीत्यर्थः । यद्वा इह नालीढेति योजना । यस्य ययोः श्रवणयोः कर्णयोरंतर्मध्ये तव लहरिलीलाकलकलः लहरीणां लीलाक्रीडा तया कलकलः कोलाहलः 'कोलाहलः कलकल इत्यमरः' । इह न यातः न प्राप्तः तस्य तयोः श्रवणयोः । अयं श्रवणरूपो न्यक्कारो धिक्कारः अस्त्विवति शेषः खलु निश्चयेन । यद्वा ययोः श्रवणयोः अंतर्मध्ये तव लहरिलीलाकलकलः न यातः ताभ्यां श्रवणाभ्यां कृत्वा किं फलम् न किमपीत्यर्थः । परंतु अयं अदर्शनाश्रयणरूपन्यक्कारो मनुजस्य नत्विंद्रियाणाम् इंद्रियव्यापारस्य मनुष्यव्यापाराधीनत्वादिति भावः । तदुक्तम् 'कारणं हि सकर्तृक' मिति । एतत्पक्षे यस्य तस्येति नाध्याहारः ताभ्यामित्यस्य चाध्याहारः । अहं तु सर्वदैव तव तनुं पश्यामि लहरीशब्दं च शृणोमि अतो मम नेत्रकर्णं न व्यर्थमित्याकूतम् । एवं च शीघ्रं मां पुनीहीति भावः । अत्र विनोक्तिध्वनिरलंकारः । त्वद्दर्शनं विना नयनयोस्त्वल्लहरीकोलाहलश्रवणं विना श्रवणयोश्च रमणीयत्वस्य फलप्रश्नधिक्काराभ्यां व्यंजनात् ॥ ३२ ॥

भा०—हे माता ! जिस मनुष्यके, जिन नेत्रोंकरके खूब सुंदर ऐसा तेरा स्वरूप प्रेमसे न देखागया और जिन कानोंके भीतर तेरी लहरियोंके खेलनेका कोलाहल न सुननेमें आया; पृथ्वीपर उस मनुष्यके चौडे चौडे इन नेत्रोंकरके क्या फल ! और इन कानोंकरकेभी क्या फल ! "कुछ-

भी नहीं ” परंतु उस मनुष्यको दर्शन, श्रवण न करनेका धिक्कार तौ अवश्य है ॥ ३२ ॥

इदानीं पुण्यवंतो विमानैः सुरपुरं स्वच्छंदं यांति पापिनस्तु पराधीनाः संतो नरकमध्ये पतंतीति कोटिद्वयं यत्र देशे त्वं नासि तत्र संभवति यत्र तु निखिलपापनाशिनी त्वमसि तत्र द्वितीयकोटेरभावात् आद्याकोटिरेव संभवतीत्याह—

अब तेंतीश ३३ वें श्लोकमें पुण्यवान् प्राणी विमानोंमें बैठ, इच्छानुसार स्वर्गमें जाते हैं. और पापी प्राणी पराधीन होके, नरकमें पड़ते हैं, पर ऐसी दो बातें तौ जिस देशमें तू नहीं है उहां बनती हैं और जहां संपूर्ण-पाप-नाश-करनेवाली तू है उहां तौ पहलीही बनती है यानी सबको स्वर्गही मिलता है; ऐसा कहते हैं. ॥

**विमानैः स्वच्छंदं, सुरपुरमयंते सुकृतिनः;**
**पतंति द्राक्पापा, जननि नरकांतः परवशाः ॥**
**विभागोऽयं तस्मिन्नशुभमयमूर्तौ जनपदे;**
**न यत्र त्वं लीला, दलितमनुजाशेषकलुषा॥३३॥**

सं०—विमानैरिति। भो जननि! सुकृतिनः पुण्यवंतः विमानैः सुरपुरं सुराणां देवानां पूर्नगरी ताम्। यद्वा सुराणां पुरं नगरं स्वर्गं स्वच्छंदं यथा स्यात्तथा न तु तद्गुणादिवशेन अयंते गच्छंति। पापाः पापरूपा जीवाः पापबाहुल्येन पापपुरुषयोस्त्रिमुनिव्याकरणमितिवदभेदः। यद्वा पापमस्ति येषां ते पापाः इति मत्वर्थे अर्शआद्यच्। अत एव “पापोऽहं पापकर्माहं” मित्यादिप्रयोगाः संगच्छंत इति दिक्। पापमर्हंतीति वा परवशाः संतः यमनगरगणाधीनाः संत इत्यर्थः। नरकांतः नरकस्यांतर्मध्ये द्राक् शीघ्रं यमनगरगमनसमय एवेत्यर्थः। पतंति। भो मातः! अयं विभागो विषयव्यवस्था तस्मिन्नशुभमयमूर्तौ अशुभमयी अकल्याणप्रचुरा मूर्तिस्तनुर्यस्य तस्मिन्। ‘स्त्रियाः पुंवदि’ति पुंवद्भावः। देशस्याशुभमयत्वं तत्र तव स्थितेरभावादेव एतादृशे जनपदे देशे ‘नीवृज्जनपदो देश इत्यमरः’। अस्त्विति शेषः। तस्मिन्नशुभमयमूर्तौ जनपदे अयं वि-

भाग इति योजना । तस्मिन्कस्मिन् यत्र जनपदे दलितमनुजाशेषकलुषा मनुजानां मनुष्याणां अशेषकलुषं समस्तपापं दलितं नाशितं मनुजाशेषकलुषं यया सा एतादृशी त्वं नासि। यत्र त्वं दलितमनुजाशेषकलुषा सती नासीति वा योजना । एवं चार्थादेतादृशी त्वं यत्रासि तत्र कस्यापि पातकिनोऽभावात्सर्वेऽपि विमानैः सुरपुरं गच्छंतीति आद्यकोटिरेव स्थितेति भावः । अत्र परिकरालंकारः । दलितमनुजाशेषकलुषेति साभिप्रायविशेषणस्य सत्त्वात् । तल्लक्षणं तु पूर्वमुक्तम् ॥ ३३ ॥

भा०–हे माता ! पुण्यवाले लोक विमानोंकरके अपनी इच्छानुसार देवोंके नगर ( स्वर्ग )में जाते हैं और पापवाले लोक पराधीन होकर, नरकमें तुरतही पड़ते है, परंतु यह विभाग, उहांही होते हैं कि–जिस अकल्याणकारक देशमें; लीलाकरकेही मनुष्योंके समस्त पाप नाश करनेवाली तू नहीं है; यानी तू जहां है उहां सब निष्पाप हैं इससे स्वर्गहीको जाते हैं ॥ ३३ ॥

इदानीं समस्तमहापातकिनोऽपि मरणसमये त्वयि शरीरं त्यक्तवंतः संत उत्तमलोकं गच्छंतीत्याह—

अब चौतीश ३४ वें श्लोकमें, सब महापापीभी अंतकालमें तेरे समीप देहत्याग करनेसे उत्तम लोकको जाते हैं ऐसा कहते हैं. ॥

**अपि घ्नंतो विप्रा, नविरतमुशंतो गुरुसतीः;**
**पिबंतो मैरेयं, पुनरपि हरंतश्च कनकम् ॥**
**विहाय त्वय्यंते, तनुमतनुदानाध्वरजुषा-;**
**मुपर्यंब क्रीडं, त्यखिलसुरसंभावितपदाः॥ ३४॥**

सं०–अपीति । अत्र ये ते इत्यध्याहारः पूर्वश्लोकात्पापा इत्यनुवर्तते तथा चैवं योजना। भो अंब ! ते पापाः पापिनः पुरुषाः अंते मरणसमये त्वयि तनुं शरीरं विहाय संत्यज्य अतनुदानाध्वरजुषाम् न तनु अल्पमित्यतनु महत् तच्च तद्दानं च तेन येऽध्वराः सर्वस्वदक्षिणा यज्ञाः 'यज्ञः सवोऽध्वरो याग इत्यमरः' यद्वा अतनूनि महांति दानानि येषु ते च ते अध्वराश्च । यद्वा अतनुदा-

नानि चाध्वराश्च । यद्वा न तनुः कोपः तेन यानि दानानि अध्वराश्च । 'तनुः कोपे त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृश इति मेदिनी' । तान् जुषंति सेवंते कुर्वंतीत्यर्थः । ते अतनुदानाध्वरजुषस्तेषां उपरि उपरिलोके क्रीडंति विहरंति महादानयागप्राप्यलोकोपरितनलोकं गच्छंतीत्यर्थः । तथा च गंगातनुत्यागादेवोत्तमलोकप्राप्तौ परमोत्कृष्टसाध्यमहादानयागेषु न किंचिदधिकं फलमिति भावः । ते के ये पापाः विप्रानपि ब्राह्मणानपि अविरतं निरंतरं यथा स्यात्तथा । इदं सर्वक्रियान्वयि । घ्नंति ते घ्नन्तः । हन्धातोः शतरि 'गमहने' त्युपधालोपः । 'नलोपे' तिषष्ठीनिषेधाद्विप्रानित्यादिद्वितीया । पुनस्ते के ये गुरुसतीः गृणाति बोधं करोति गुरुः । 'कृग्रोरुच्चे' त्युणादिसूत्रेण गृशब्दे इत्यस्मात् कुप्रत्ययः उकारश्चादेशः । तथा चोपनयनादर्वाचीनसंस्कारपूर्वकं वेदाध्यापको मंत्रोपदेशकश्च गुरुः 'स्यान्निषेकादिकृद्गुरुरित्यमरः' । तस्य सत्यः पतिव्रताः स्त्रियः । 'सती साध्वी पतिव्रतेत्यमरः' ताः उशंत उशंति इच्छंति ते उशंतः । वशकांतौ अदादिः तत्र हि कांतिरिच्छेत्युक्तम् तस्माच्छतरि 'ग्रहिज्ये' ति संप्रसारणम् । यद्वा गुरोः पितुः सतीः मातृरित्यर्थः । यद्वा गुरोः श्रेष्ठस्य पितृव्यभ्रातृमातृमातुलादेः सतीः यद्वा गुरोः बृहस्पतेः सतीः । तस्य एकस्त्रीत्वेऽपि जात्यभिप्रायेण बहुवचनमिति यथा कथंचिद्योज्यम् । तथा चानेकार्थकोशः । 'गुरुः पिता गुरुः श्रेष्ठो गुरुः सुरपुरोहितः । दुर्वहोऽपि गुरुः प्रोक्तो गुरुः शिष्याभिसेवक इति' । पुनः कथंभूतास्ते ये मैरेयं सीधुम् । 'मैरेयमासवः सीधुरित्यमरः' । पिबंतः पानं कुर्वंतः । पुनः कथंभूतास्ते ये कनकं सुवर्णं 'सुवर्णं कनकमित्यमरः' हरंतः चोरयंतः । कथंभूतास्ते अखिलसुरसंभावितपदाः अखिलसुरैः समस्तदेवैः संभावितं संभावनायुक्तं कृतं पूजितमिति यावत् तादृशं पदं चरणं येषां ते बहुवचनांतेन समासः । यद्वा अखिलसुराणां संभावितं प्राप्तं तादृशं पदं स्थानं यैस्ते । 'सप्तमीविशेषणे' इति ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिर्वा कर्तव्यः । सम्पूर्वकभूधातोर्णिजंतात्क्तः उपसर्गबलादुक्तार्थलाभः ॥ ३४ ॥

भा०—हे गंगा! जो ब्राह्मणकोभी मार-डालनेवाले और जो निरंतर गुरुओंकीभी पतिव्रता स्त्रियोंको भोगनेकी इच्छा करनेवाले और जो मदिरा पीनेवाले और सोनाभी चोरानेवाले, ऐसे ऐसे महापापीभी, मरतेसमय तेरे इहां देह त्यागनेसे, समस्त देवोंसे चरण-वंदन पाकर, बहुतसे दान और यज्ञोंको करनेवालोंकेभी ऊपरके स्थानमें क्रीडा करते हैं. ॥ ३४ ॥

इदानीं महांश्चोरः पुनरपि नराणां प्राणहारकोऽपि वायुस्त्वल्लहरिसंबंधमाहात्म्येन त्रिभुवनं पवित्रीकरोतीत्याह—

अब पैंतीश ३५ वें श्लोकमें, बड़ा चोर और मनुष्योंके प्राणभी लेनेवाला वायु, तेरी लहरियोंके संबंधरूप माहात्म्यसे त्रिभुवनको पवित्र करता है. ऐसा कहते हैं. ॥

**अलभ्यं सौरभ्यं, हरति सततं यः सुमनसां;**
**क्षणादेव प्राणा, नपि विरहशस्त्रक्षतभृताम् ॥**
**त्वदीयानां लीला, चलितलहरीणां व्यतिकरात्;**
**पुनीते सोऽपि द्रा, गहह पवमानस्त्रिभुवनम् ॥ ३५**

संः—अलभ्यमिति । भो अंब! सोऽपि परचौर्यपरप्राणहारित्वादिगुणयुक्तोऽपि पवमानः प्रभंजनः 'पवमानः प्रभंजन इत्यमरः' त्वदीयानां तव इमास्त्वदीयाः। 'युष्मदस्मदोरन्यतरस्यां खञ्चे' ति चाच्छः 'प्रत्ययोत्तरपदयोश्चेति' त्वादेशः तासां लीलाचलितलहरीणां लीलया चलिताश्चंचलाः गच्छंतो वा चलगतावित्यस्मात् 'गत्यर्थाकर्मके' त्यनेन कर्तरि क्तः । एतादृशो याः लहर्यस्तासां व्यतिकरात्संबंधात्त्रिभुवनं जगत्त्रयं पुनीते पवित्रीकरोति । अहहेत्यद्भुते 'अहहेत्यद्भुते खेद इत्यमरः' ननु देवोऽपि वायुः कथं चौर्यादिगुणयुक्त इत्याकांक्षायामाह स कः यः पवमानः सुमनसां पुष्पाणां 'स्त्रियः सुमनसः पुष्पमित्यमरः' । अलभ्यमन्यत्र चोरैरप्राप्यम् । अनेन चौर्ये वायोः कौशल्यमावेदितम् । एतादृशं सौरभ्यं सौगंध्यं नियतं यथा स्यात्तथा हरति चोरयति । पुनः स कः यो विरहशस्त्रक्षतभृतां विरह एव स्त्र्यादिवियोग एव शस्त्रं मारकत्वात् । यद्वा विरहश्च शस्त्रं च विरहशस्त्रे ताभ्यां यत्क्षतं तद्बिभ्रति ते विरहश-

स्त्रक्षतभृत तेषां । क्वचित्तु विरहशस्त्रक्षतहृतमिति पाठः तत्र विरहशस्त्राभ्यां क्षतं क्षतयुक्तं कृतम् विदारितमिति यावत् । तादृशं हृत् येषामिति समासः यद्वा विरहशस्त्रयोः क्षतं यस्मिन्निति व्यधिकरणपदो बहुव्रीहिः । तादृशं हृत् येषां विरहशस्त्रक्षतयुक्तं हृद येषामिति । शाकपार्थिवादित्वान्मध्यमपदलोपि समासो वा । तेषां प्राणानपि असूनपि 'पुंसि भून्म्यसवः प्राणा इत्यमरः' क्षणादेव क्षणमात्रेणैव नियतं यथा स्यात्तथा हरति एतादृशो दुष्टो वायुः श्रेष्ठस्त्वज्जहरिसंबंधमाहात्म्येन महत्कार्यं करोतीति भावः । उक्तं च हनुमन्नाटके 'ये मज्जंति निमज्जयंति च परांस्ते प्रस्तरा दुस्तरे वार्द्धौ वीर तरंति वानरभटान् संतारयंतेऽपि च । नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः श्रीमद्दाशरथेः प्रतापमहिमा सोऽयं समुज्जृंभते' इति । लोकेऽपि दुष्टः प्रभुभृत्यत्वसंबंधमाहात्म्येन महत्कार्यं करोतीति प्रसिद्धमेव ॥ ३५ ॥

भा०—हे माता ! जो सुगंध दूसरे चोरोंको कहींभी न मिलै ऐसे फूलोंके सुगंधको निरंतर हरनेवाला और स्त्री-आदिओंके बिछुड्नेरूप हथियारसें घायल भये मनुष्योंके प्राणोंकोभी क्षणमात्रमें हरनेवाला. ऐसा जो वायु सोभी, तेरी लीलाओंसे चलती लहरियोंके स्पर्श होनेसे झटसेही संपूर्ण त्रिभुवनको पवित्र करता है, यह आश्चर्य है ! ॥ ३५ ॥

इदानीं केचन लोकाः परकार्यसंपादकाः संति केचन पवित्रात्मानः संतः परलोकप्रणयिनो भवंति । अहं तु त्वयि स्थापितलोकद्वयभरः सन् सुखेन निद्रां करोमीत्याह—

अब छत्तीश ३६ वें श्लोकमें, कोई एक लोक तो परोपकारही करते हैं और कोई-एक लोक पवित्र होके, परलोकसाधन करते है; और मै तो यह लोक, पर लोक दोनोंका बोझा तेरेपर रखकर, सुखसे सोता हूं ऐसा कहते हैं.

**कियंतः संत्येके, नियतमिह लोकार्थघटकाः;**
**परे पूतात्मानः, कति च परलोकप्रणयिनः ॥**
**सुखं शेते मात, स्तव खलु कृपातः पुनरयं;**
**जगन्नाथः शश्व, त्त्वयि निहितलोकद्वयभरः ॥३६**

सं०– कियंत इति। भो मातः! कियंतः कतिसंख्याकाः एकेऽसाधारणा लोकाः इह जगति नियतं लोकार्थघटकाः लोकानां जनानां अर्थाः प्रयोजनानि 'अर्थरैविभवा अपीत्यमरः' तेषां घटकाः संप्रयोजकाः संति यद्वा इह कियंतः एके लोकार्थघटकाः संतः परलोकप्रणयिनः परलोकं प्रणयंति प्रार्थयंति ते यद्वा परलोकं प्रकर्षेण नयंति गच्छंति ते परलोकप्रणयिनः संतीति योजना इह लोके परकार्यसंपादनजन्यपुण्येन स्वर्गलोकं गच्छंति एवं च तेषामयं लोकः परलोकश्च समीचीन इत्याकूतम्। परे चान्ये च कति। यद्वा कति परे च पूतात्मानः संतः पूतस्तपःसेवनादिना पवित्रः आत्मा येषां ते एतादृशाः संतः नियतं परलोकप्रणयिनः संति। भो मातः! अयं जगन्नाथस्तु पुनः शब्दस्त्वर्थः तव कृपातः। पंचम्यंतात्तसिल्। दयाहेतोः शश्वन्निरंतरं सुखं यथा स्यात्तथा शेते निद्रां करोति। शश्वदित्यनेन कदाप्यन्यत्र करोति सुखमित्यनेन तत्रैव मम सुखं नान्यत्रेति सूचितम्। ननु एवं च लोकद्वये तव का गतिरिति चेत्तत्राह। कथंभूतोऽयं त्वयि निहितलोकद्वयभरः त्वयि भवत्याम् लोकद्वये इहलोके परलोके च भरः सर्वेभ्य उत्कृष्टता निहितः स्थापितो लोकद्वयभरो येन सः। भरः उदरपोषणम् वा। डुभृञ्धारणपोषणयोरित्यस्मादच्चीति दिक्॥ ३६॥

भा०–हे माता! कितने-एक मनुष्य इस जगतमें नियमसे उपकारके लिये लोकोंकेही कार्य साधते हैं और कितने-एक मनुष्य देहकी अंदरबाहर शुद्धकरके, परलोक मिलनेके साधन करते हैं; और यह जगन्नाथ (मैं) तौ तेरी पूर्ण कृपा है इसी लिये इस लोक परलोक इन दोनोंका बोझा तेरेऊपर रखकर, खूबही सुखसे सोता है. (हूं)॥ ३६॥

इदानीं ननु रे पापनिवृत्तये मां स्तौषि तत्रादौ पापमेव किमर्थं करोषीति चेत्त्वया स्वपतिताश्लीलशवशकलसमुदायपरित्राणं यथा क्रियते तथा मयापि पापं क्रियते स्वस्वभावस्य सर्वैरपि दुष्परिहारित्वादित्याह—

अब सैंतीश ३७ वें श्लोकमें, अरे ! तू पाप छुड़ानेको मेरी स्तुति करता है तौ पापही क्यों करता है ? ऐसा जो कहे तो, तेरेसे जैसे तेरेमें टूटे फूटे मुरदोंकी लहासोंके टूकोंके समुदायभी आयपड़े तौभी वे तारे जाते है, वैसे मेरेसे पाप किये जाते हैं. क्योंकि अपना अपना स्वभाव कोईसेभी छूटना मुश्किल है ऐसा कहते हैं ॥

**भवत्या हिं व्रात्या, ऽधमपतितया खंडपरिष-;**
**त्परित्राणस्नेहः, श्लथयितुमशक्यः खलु यथा ॥**
**ममाप्येवं प्रेमा, दुरितनिवहेष्वंब जगति;**
**स्वभावोऽयं सर्वै, रपि खलु यतो दुष्परिहरः ३७**

**सं०–भवत्या हीति** । भो अंब ! व्रात्याधमपतितया व्रात्याश्च अधमाश्च व्रात्याधमाः व्रात्याः संस्कारहीना अधमा नीचास्ते पतिता यस्यां सा तया। आहिताग्न्यादित्वात्पतितशब्दस्य परनिपातः । यद्यपि पतेः सनितनिपति इत्यस्य वेट्कत्वात् निष्ठायां 'यस्य विभाषे' ति इण्निषेधः प्राप्नोति तथापि 'द्वितीयाश्रितातीतपतिते' ति निपातनाद्भवति। एतादृश्या भवत्या त्वया खंडपरिषत्परित्राणस्नेहः खंडानामर्थात्स्वपतितशवशकलानां । 'भित्तं शकलखंडे वा पुंस्यर्द्धोऽर्द्धं समेंऽशके इत्यमरः' परिषत् समुदायस्तस्याः परित्राणं पालनं तत्र स्नेहः प्रेम 'प्रेमा ना प्रियता हार्दं प्रेम स्नेह इत्यमरः' श्लथयितुं त्यक्तुं यथा शक्यः खलु निश्चयेन एवं दुरितनिवहे दुरितस्य पापस्य निवहः समूहः तत्र ममापि प्रेमा प्रियता। अस्तीति शेषः। यतो यस्मात् कारणात् जगति सर्वैरपि अयं स्वभावो निसर्गः 'स्वरूपं च स्वभावश्च निसर्गश्चेत्यमरः' दुष्परिहरो दुःखेनापि परिहर्तुमशक्यः । अस्तीति शेषः । दुःखशब्दे उपपदे हरतेः 'ईषद्दुःस्वि'ति सूत्रेण खल् । यद्वा दुरितनिवहे जगतीति योजना । व्रात्याधमपतितयेत्यनेन तेषामपि रक्षणे किं वक्तव्यं पुण्यवतामित्यावेदितम् । खंडमित्यनेन अवयवस्य पालने किं वक्तव्यम् अवयविनः इत्याशयः। परिषदित्यनेनैकमपि न त्यजत इति भावः । दुरितनिवहेत्यनेन बहुषु पातकेषु ममेच्छा न त्वेकस्मिन् द्वयोर्वे-

त्यावेदितम् । अत्र निंदया स्तुत्यभिव्यक्तेर्व्याजस्तुत्यलंकारः । तदुक्तं कुवलयानंदे 'उक्तिर्व्याजस्तुतिर्निंदास्तुतिभ्यां स्तुतिनिंदयो' रिति । मम यथा 'विवेकलेशोऽपि न ते रामचंद्र रणे रिपून् । हतान् स्वनाशकान् शीघ्रं पापिनो नयसे दिव, मिति अत्रारीन् दिवं नयसे इत्युक्त्या भक्तानवश्यं नयसे इति स्तुत्यभिव्यक्तिः ॥ ३७ ॥

भा०–हे माता ! जहां संस्कारहीन और नीचभी आयके, पड़ें तो तर जावें ऐसी तेरेसे मरे भये प्राणियोंके टूकोंका समूहभी अपनेमें आय पड़े तौ उनकेभी उद्धार करनेका प्रेम जैसे छोड़नेको जरूर अशक्य है. वैसेही मेरा-भी प्रेम पापसमुदायमें है. कारण कि–जगतमें सब लोगोंको अपना अपना स्वभाव छोड़देनेको बहुत अशक्य है. " टूक और नीचोंको तारै ! तौ साक्षात् स्नानसे और पुण्यवानोंको क्यों नहीं तारैगी ? " ॥ ३७ ॥

इदानीं गंगातांडवविधिं वर्णयन् स्वतापशमनं प्रार्थयते––

अब अरतीश ३८ वें श्लोकमें गंगाजीके तांडव ( तंडु मुनिकरके कहा भया ), नृत्य ( नाच )का वर्णन करके अपना ताप हरनेको प्रार्थना करते हैं ॥

**प्रदोषांतर्नृत्य, त्पुरमथनलीलोद्धृतजटा-;**
**तटाभोगप्रेंख, ल्लहरिभुजसंतानविधुतिः ॥**
**बिलक्रोडक्रीड, ज्जलडमरुटंकारसुभग-;**
**स्तिरोधत्तां तापं, त्रिदशतटिनीतांडवविधिः ३८**

सं०–प्रदोषेति । त्रिदशतटिनीतांडवविधिः त्रिदशानां देवानां तटिनी गंगा तस्यास्तांडवं । तंडुना तच्छास्त्रप्रवर्तकाचार्येण प्रोक्तं तांडवं नाट्यं 'तेन प्रोक्त' मित्यणि ' ओर्गुण ' इति गुणः ' तांडवं नटनं नाट्यमित्यमरः' । तस्य विधिः करणं 'विधिर्विधाने दैवे चे-त्यमरः ' तापमर्थाद्भक्तजनसंतापं । यद्वा पूर्वश्लोकान्ममेत्यनुवर्तते । तथा च मम तापं तिरोधत्तां अंतर्धानं गमयतु नाशयत्वित्यर्थः । तांडवसामग्रीमाह । कथंभूतस्त्रिदशतटिनीतांडवविधिः प्रदोषांतर्नृत्यत्पुरमथनलीलोद्धृतजटातटाभोगप्रेंखल्लहरिभुजसंतानविधुतिः प्रदोषस्य सूर्यास्तानंतरं षड्घटिकात्मककालस्यांतर्मध्ये नृत्यन्नृत्यं कुर्वन् स चासौ पुरमथनश्च शिवश्च तेन लीलया उद्धृता उत् ऊर्ध्वं धृता।

इयं नृत्यचेष्टा । एतादृश्यो या जटाः संयताः केशाः ' जटा स्यात्संयतालका इति कोशः' तटे आभोगः पतनात्मकः संयोगः संबंधः नृत्यत्पुरमथनलीलोद्धृतजटानां तटाभोगस्तेन प्रेंखंत्यो गच्छंत्यश्चंचला वा या लहर्यो वीच्यस्ता एव भुजाः संतानं च विधुतिश्च संतानविधुती संतानं दीर्घीकरणं विधुतिः कंपः भुजानां संतानविधुती यस्मिन् स प्रदोषांतः इदं समस्तं व्यस्तं वा उक्तप्रदोषलक्षणे प्रमाणं तु ' त्रिमुहूर्तं प्रदोषः स्याद्भानावस्तंगते सती'ति हेमाद्र्याद्युदाहृतं वचनं बोध्यमिति दिक् । संतानेत्यत्र सम्पूर्वकधूञ्कंपने इत्यस्मात् स्त्रियां क्तिन् । पुनः कथंभूतः त्रिदशतटिनीतांडवविधिः बिलक्रोडक्रीडज्जलडमरुटंकारसुभगः बिलस्य विवरस्य क्रोडं अर्थात् मध्यः ' नना क्रोडं भुजांतरमित्यमरः' तत्र क्रीडत् विहरत् यज्जलं तदेव डमरुर्वाद्यविशेषः ढक्केत्यर्थः 'वाद्यप्रभेदा डमरुमड्डुडिंडिमझर्झरा इत्यमरः' तस्य तेन वा यः टंकारः शब्दविशेषः तेन सुभगः शोभनं सुष्ठु वा भगं' श्रीर्यस्य सः ' भगं श्रीकाममाहात्म्येत्यमरः' सुंदर इत्यर्थः क्वचित्तटक्रोडेति पाठः ॥ ३८ ॥

भा०–प्रदोषके (संध्यासे लगा पहली छह ६ घड़ी रातके ) समयमें नृत्य करते श्रीमहादेवजीकी लीलासे ऊपर फेंकी भयी जटाओंके मूलोंपर पड़नेके संयोगसे खलभल-करती लहरियोंरूप हाथोंका फेंकनें–हिलाने–आदि विलास है जिसमें और पर्वत–आदिकोंके बिलोंके भीतर धसते जलोंके शद्बरूप डमरूके नादोंकरके जो शोभायमान, ऐसी देवोंकी नदी-श्रीगंगाके तांडव ( नृत्य ) का प्रकार, मेरे तापको हरे. ॥ ३८ ॥

इदानीं सर्वदा भवत्यां स्थापितकुशलचिंताभरं मां त्वं विषमे अस्मिन् समये यदि त्यजसि तर्हि अतः परं भुवनत्रये तव विश्वासं कोऽपि न कुर्यात् तव करुणा च निराधारा स्यादिति गंगाया भयप्रदर्शनेनाह—

अब उन्तालीश ३९ वें श्लोकमें सदा तेरेपर कुशल होनेकी चिंताका समूह रखदेनेवाले मेरेको अगर ऐसे संकटके बखत त्यागकरेगी तौ आजसे पीछे तीनों लोकोंमें तेरा विश्वास कोईभी नहीं करेगा. और तेरी कृपाभी निराधार होजावेगी; ऐसा गंगाजीको भय दिखाकरके, कहते हैं. ॥

**सदैव त्वय्येवा-र्पितकुशलचिंताभरमिमं;**
**यदि त्वं मामंब, त्यजसि समयेऽस्मिन् सुविषमे ॥**
**तदा विश्वासोऽयं, त्रिभुवनतलादस्तमयते;**
**निराधारा चेयं, भवति खलु निर्व्याजकरुणा ३९**

सं०—सदैवेति। भो अंब ! सदैव सर्वदैव त्वय्येव भवत्यामेव एवेत्यनेन तीर्थांतरं व्यावर्तयति अर्पितकुशलचिंताभरं कुशलस्य क्षेमस्य 'कुशलं क्षेममस्त्रियामित्यमरः' तस्य चिंता कथं मम कुशलं भविष्यतीत्याकारिका तस्या भर आधिक्यं बह्वी चिंतेत्यर्थः । भरः समूहो वा अर्पितः स्थापितः कुशलचिंताभरो येन सः त्वं गंगैव मम कुशलं करिष्यतीति मन्यमानमित्यर्थः । इमं त्वत्समीपे वर्त-[illegible]मेतादृशं मां सुविषमे सुतरामत्यंतं विषमो दुःसहस्तस्मिन् अतिकठिन इत्यर्थः । यद्वा विषं गरलं मयते ददातीति विषमस्तस्मिन् । मेङ्प्रणिदाने इत्यस्य 'आदेश उपदेशेशिती' त्यात्वे 'आतोनुपसर्गे क' इति 'आतोलोप इटि चे' त्याकारलोपः एतादृशेऽस्मिन् समये यदि त्यजसि तदा तर्हि अयं विश्वासो गंगा शरणागतकुशलकर्त्रीत्याकारो निश्चयस्त्रिभुवनतलात् त्रिभुवनस्य तलं तस्मादस्तं तिरोभावमयते गच्छति गमिष्यतीति वा 'वर्तमानसामीप्ये' इति भविष्यति लट् । च पुनः इयं निर्व्याजकरुणा अकपटकरुणा निराधारा निर्गत आधारो यस्याः सा एतादृशी भवति खलु निश्चयेन संदेहो नास्तीति भावः । विश्वासाभावेन कस्यापि तव निकटे आगमनाभावात् करुणायास्तिरोहितत्वात् । लोकेऽपि यस्य विश्वासो नास्ति तस्य निकटे कोऽपि न गच्छतीति प्रसिद्धमेव । एवं च माहात्म्यसंरक्षणाय झटिति ममोद्धरणं कुर्विति गंगाया भीतिप्रदर्शनमिति भावः । क्वचित्तु समये इत्यस्य स्थाने विषये इति पाठः । तत्र विषयोद्धरणरूपे विषये इत्यर्थः ॥ ३९ ॥

भा०—हे माता! सदा ( सर्वकाल ) तेरेही ऊपर सब कुशलहोनेकी चिंताका समूह रखदेनेवाले यह शरण आये भये मेरेको इस बहुत संकटके बखतमें जो तू त्याग करेगी तौ तेरा "गंगा शरणागतोंकी कुशल कर-

ती है " ऐसा यह विश्वास अस्त हो जायगा. और यह निष्कपट मेहरबानीभी अवश्यही निराधार होजायगी. ॥ ३९ ॥

इदानीं हरवामभागे का द्वितीया कांता वर्तते इति प्रेक्षितुं कपर्दादुल्लस्य सीमंतसरणौ आगता अतएव पार्वत्या सापत्न्यभावात्करेणाकर्षिता एतादृश्यस्तव लहर्यो विजयंतामित्याह—

अब चालीश ४० वें श्लोकमें श्रीमहादेवके बाएं तरफ कौन स्त्री है ? ऐसा देखनेको जटा-जूटमेंसे उछलके अपनी वेनीपर आकर, झकोले खानेलगी इसीसे पार्वतीनें सवतपनेसे हाथकरके भिरकायदी ऐसी जे तेरी लहरिएं उनका जय हो ऐसा कहते हैं.

**कपर्दादुल्लस्य, प्रणयमिलदर्धांगयुवतेः;**
**पुरारेः प्रेंखंत्यो, मृदुलतरसीमंतसरणौ ॥**
**भवान्या सापत्न्य, स्फुरितनयनं कोमलरुचा-;**
**करेणाक्षिप्तास्ते जननि विजयंतां लहरयः ॥४०॥**

**सं०—कपर्दादिति।** भो जननि! ते तव लहरयः कपर्दात् शिवजटाजूटात् उल्लस्य प्रसृत्य प्रणयमिलदर्धांगयुवतेः प्रणयेन प्रीत्या मिलती संयुज्यमाना अर्धांगे वामभागे युवतिः पार्वती यस्य सः तस्य पुरारेः शिवस्य मृदुलतरसीमंतसरणौ अतिशयेन मृदुलः कोमलो मृदुलतरः तादृशो यः सीमंतः केशवेशः । 'सीमंतः केशवेशे' इति शकंध्वादिगणसूत्रेण पररूपम्। तस्य सरणिस्तत्र प्रेंखंत्यो गच्छंत्य उपरिष्टादधोभागे आगता इत्यर्थः । पुनः कथंभूता अतएव भवान्या पार्वत्या कर्तृभूतया कोमलरुचा कोमला रुक् कांतिर्यस्य तेन । एतेन पार्वतीसौंदर्यमुक्तम् । अतएव शिवेन प्रीतिवशात् लहरीकर्षणेन निवारिता एतादृशेन करेण सापत्न्यस्फुरितनयनं यथा स्यात्तथा समानः पतिर्यस्याः सा सपत्नी तस्या भावः सापत्न्यं तेन स्फुरितेन कोपेन चंचले नयने यस्मिन्कर्मणि यथा भवति तथा आक्षिप्ता आकर्षिताः क्वचित्तु भवान्या इति षष्ठ्यंतः पाठः । तत्र भवान्याः करेण कर्तृभूतेनेत्यर्थः ॥ ४० ॥

**भा०—**हे माता ! श्रीमहादेवके जटाके जूडेमेंसे कूदके और प्रेमसे आधे

अंगमें मिलती जो पार्वती तिसके कोमल केशकी रचनापर झकलार्ती इसीसे पार्वतीनें सवतभावसे आंखें फर-फराके, कोमल-कांतिवाले हाथकरके आक्षिप्त किया, ऐसी जे तेरी लहरिएं ते जय पावें. ॥ ४० ॥

इदानीं बहवो लोकास्त्वामायांति तत्र तेषामभीष्टं करोषीति कारणं वर्तते अहं तु स्वभावादेव त्वय्यनुरक्त इति तुभ्यं शप इत्याह—

अब एकतालीश ४१ वें श्लोकमें, बहुत लोक तेरे इहां आते हैं, परंतु उसमें कारण यह है कि—तू उनके मनोरथ पूरे करती है. और मैं तौ स्वभावसेही तेरेमें तत्पर हूं, ऐसी सौगन्ध खाता हूं. ऐसा कहते हैं.

**प्रपद्यंते लोकाः, कति न भवतीमत्रभवती-;**
**मुपाधिस्तत्रायं, स्फुरति यदभीष्टं वितरसि ॥**
**शपे तुभ्यं मात, र्मम तु पुनरात्मा सुरधुनि;**
**स्वभावादेव त्व, य्यमितमनुरागं विधृतवान् ४१**

**सं०—प्रपद्यंत इति।** भो मातः! सुरधुनि! कति लोकाः अत्रभवतीं पूज्यां भवतीं त्वां न प्रपद्यंते नायांति अपि तु बहवः प्रपद्यंत इत्यर्थः। तत्रायमुपाधिः कारणं स्फुरति वर्तते। किं तदित्याकांक्षायामाह। यत् यस्मात् कारणात् अभीष्टं वांछितं वितरसि ददासि तेभ्य इति शेषः। मम तु पुनर्जगन्नाथस्यात्मा स्वभावादेव निसर्गादेव त्वयि भवत्याममितमपरिमितमनुरागं प्रीतिं विधृतवान् धारयामास इति तुभ्यं भवत्यै शपे शपथं करोमि 'श्लाघन्हुङ्स्थाशपामिति' संप्रदानत्वम् ॥ ४१ ॥

भा०—हे माता! देवोंकी गंगा! पूजा करनेयोग्य ऐसी तेरे इहां कितने लोक नहीं आते हैं, किंतु बहुत आते हैं. परंतु उसमें यह कारण स्पष्ट होता है कि—तू जो उनको मनकामना पूरी करती है; पर मैय्या! मैतो सौगंध खाकर, कहता हूं कि—मेरा मनतौ स्वभावसेही तेरेमें अप्रमाण प्रीति रखता है. ॥ ४१ ॥

इदानीं त्वदीया मृत्तिका मदीयं समस्तं शोकं दूरीकरोत्विति प्रार्थयते—

अब बयालीश ४२ वें श्लोकमें, तेरी मृत्तिका ( मट्टी ) मेरा समस्त शोक दूर करे, ऐसी प्रार्थना करते हैं. ॥

**ललाटे या लोकै, रिह खलु सलीलं तिलकिता;**
**तमो हंतुं धत्ते, तरुणतरमार्तंडतुलनाम् ॥**
**विलुंपंती सद्यो, विधिलिखितदुर्वर्णसरणिं;**
**त्वदीया सन्मृत्स्ना, मम हरतु कृत्स्नामपि शुचम्॥**

**सं०—ललाट इति** । पूर्वश्लोकात्संबोधनपदमावर्तनीयम् । भो सुरधुनि! त्वदीया त्वत्संबंधिनी सा मृत्स्ना प्रशस्ता मृत् 'सस्नौ प्रशंसाया' मिति मृच्छब्दात्स्नप्रत्ययः । 'मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिकेत्यमरः' । मम जगन्नाथकवेः कृत्स्नामपि संपूर्णामपि शुचं शोकं हरतु । ननु मृत्तिकायाः शोकहरणे कथं सामर्थ्यमित्याकांक्षायामाह । सा का या मृत्स्ना इह लोके ललाटे भालदेशे सलीलं यथा स्यात्तथा तिलकिता सती पुंड्रीकृता तमो हंतुं तरुणतरमार्तंडतुलानां तरुणतरो माध्याह्निको यो मार्तंडः सूर्यस्तस्य तुलनां साम्यं धत्ते बिभर्ति । अत्र प्रमाणं तु 'गंगातीरसमुद्भूतां मृदं मूर्ध्ना बिभर्ति यः । बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलमिति, ब्रह्मांडपुराणवचनं बोध्यम् । तिलककरणप्रकारोऽप्युक्तस्तत्रैव । 'वामहस्ते जलं कृत्वा सावित्र्या चाभिमंत्रितम् । तद्विष्णोरिति मंत्रेण मर्दयेन्मृत्तिकां ततः । अतो देवेति सूक्तेन तिलकं कारयेत्सदे' ति । इदं तिलककरणं प्रातःस्नानोत्तरं बोध्यम् । पुनः सा का या विधिलिखितदुर्वर्णसरणिं विधिना ब्रह्मणा लिखितास्ते च ते दुर्वर्णाः दुष्टाक्षराणि अयं दरिद्रो भविता मृतभार्यश्चेत्यादयः तेषां सरणिस्तां सद्यः पालनाव्यवहितोक्तकाले एव विलुंपंती विशेषेण लुंपंती प्रोच्छंती एवं च विधिलिखितमपि अलीकं कुर्वत्यास्तव मम शोकहरणे सामर्थ्यमस्तीति भावः ॥ ४२ ॥

**भा०**—हे गंगा ! जो, इस लोकमें लोकोंनें लीलासे ही कपालमें तिलक करके लगाई है सो तम ( अँधेरा ) नाश करनेको दुपहरीके जवान सूर्यकी

---

१ ब्रह्मांडपुराणमें कहा है कि—गंगाके किनारेकी माटी माथेमें जो लगाता है

बराबरी करती है और ब्रह्माके लिखेभये कपालमेंके ' यह दरिद्री होगा स्त्री मरेगी ' इत्यादि खराब अक्षरोंकी पंक्तिको उसीदम मिटादेती है, ऐसी तेरी उत्तम प्रसिद्ध मृत्तिका मेरे परिपूर्ण शोकको हरे. ॥ ४२ ॥

इदानीं मूढान्नरानुपहसंतः स्ववासिभ्रमराणां मालिन्यदोषं दूरीकुर्वाणाश्च गंगातीरतरवः मम सखायः संत्वित्याह—

अब तेंतालीश ४३ वें श्लोकमें, मूर्ख मनुष्योंकी हांसी करते और अपनेपर रहनेवाले भंवरोंकेभी दोषोंको दूर करनेवाले, ऐसे गंगा-तीरके वृक्ष मेरे मित्र होवें; ऐसा कहते हैं. ॥

**नरान्मूढांस्तत्त, ज्जनपदसमासक्तमनसो;**
**हसंतः सोल्लासं, विकचकुसुमव्रातमिषतः ॥**
**पुनानाः सौरभ्यैः, सततमलिनो नित्यमलिनान्;**
**सखायो नः संतु, त्रिदशतटिनीतीरतरवः ॥४३॥**

**सं०–नरानिति ।** त्रिदशतटिनीतीरतरवः त्रिदशतटिन्याः गंगायाः तीरं तत्र तस्य वा तरवः वृक्षाः नः अस्माकं भक्तजनानां सखायः मित्राणि संतु भवंतु ' अथ मित्रं सखा सुहृदित्यमरः ' कथंभूताः त्रिदशतटिनीतीरतरवः मूढान् मूर्खान् अत एव तत्तज्जनपदसमासक्तमनसः ते च ते च जनपदाश्च तत्तज्जनपदाः स्वदेशाः ' नीवृज्जनपदो देश इत्यमरः ' तेषु समासक्तं संबंधं एतादृशं मनो येषां ते तान् एतादृशान् नरान् मनुष्यान् विकचकुसुमव्रातमिषतः विकचानि प्रफुल्लानि यानि कुसुमानि पुष्पाणि तेषां व्रातः समूहः तस्य तदेव वा मिषं छलं तस्मात्सोल्लासं सहर्षं यथा स्यात्तथा हसंतः हास्यं कुर्वंतः एतेषां दुष्टस्वीयस्वीयदेशरचितभक्त्या तत्रैव मरणेन दुर्गतिर्भविष्यति अस्माकं तु सदैव गंगातीरवासित्वात् उभयगतिर्भविष्यतीति तानुपहसंतीत्युत्प्रेक्षा । पुनः

---

सो केवल अंधेरा नाश करनेके लिये सूर्यके समान रूप पाता है. उहांही तिलक विधिभी कही है कि–वाएं हाथमें गायत्रीसे अभिमंत्रित जल लेके, फेर 'ॐ तद्विष्णोः, इस मंत्रसे मृत्तिकाका मर्दन करे. और. अतो देवा ' इस सूक्तसे तिलक करे.

कथंभूताः नित्यमलिनाः नित्यं मलिनाः मालिन्ययुक्ताः तान् जन्मतः श्यामानित्यर्थः । एतादृशान् अलिनः भ्रमरान् सौरभ्यैः निजकुसुमसौगंध्यैः सततं निरंतरं यथा स्यात्तथा पुनानाः पवित्रीकुर्वाणाः एवं च तादृशान् ये पुनंति ते स्वसखं मामपि पवित्रं करिष्यंतीति भावः । सौरभ्यैर्नित्यमलिनान् पुनाना इति वा योजना । ' मधुलिण्मधुपालिन इत्यमरः ॥ ४३ ॥

भा०—अपने अपने उन उन देशोंमेंही अच्छी तरहसे संसक्त होके, रहनेवाले, अविचारी मनुष्योंको हर्ष-युक्त होकर, खुले भये फूलोंके समूहके मिषसे हँसनेवाले और अपनी सुगंधोंकरके, हमेश काले काले बनेहुए भ्रमरोंकोभी सदा पवित्र करनेवाले जो देव-नदी श्रीगंगाके किनारोंके वृक्ष सो हमारे मित्र होवें. ॥ ४३ ॥

इदानीं केचन स्वेष्टफलावाप्तये यमनियमादियोगं कुर्वंति अहं त्वन्नामस्मरणेन प्राप्तकामः सन् जगज्जालं तृणतुल्यं मन्ये इत्याह—

अब चौआलीश ४४ वें श्लोकमें, कोई लोक इष्ट-सिद्धिके वास्ते देवोंका आराधन, यज्ञ, यम, नियम, करते हैं; और मैंतो तेरे नाम-स्मरणसेही पूर्णकाम हो, सारे जगत्को तृणतुल्य मानता हूं. ऐसा कहते हैं. ॥

**यजंत्येके देवान् कठिनतरसेवांस्तदपरे;**
**वितानव्यासक्ता, यमनियमरक्ताः कतिपये ॥**
**अहं तु त्वन्नाम–स्मरणकृतकामस्त्रिपथगे;**
**जगज्जालं जाने, जननि, तृणजालेन सदृशम् ५४**

सं०—यजंतीति । भो त्रिपथगे! एके लोकाः कठिनतरसेवान् अतिशयेन कठिना कठिनतरा सेवा येषां ते तान् एतादृशान् देवान् विष्णवादीन् यजंति पूजयंति तदपरे तेभ्यो देवपूजकेभ्यः अपरे अन्ये पंचमीति योगविभागात्समासः । यद्वा ते देवपूजकाः अपरे येभ्यः ते इति पंचम्यर्थे बहुव्रीहिः देवपूजकेभ्य उर्वरिता इत्यर्थः वितानव्यासक्ताः वितानेषु उल्लोचेषु यज्ञेषु वा व्यासक्ताः विशेषेण आसक्ताः तत्परा इत्यर्थः संतीति शेषः । ' अस्त्री वितानमुल्लोच इत्यमरः ' लोके चांदवा इति प्रसिद्धिः । ' क्रतुविस्तार-

योरस्त्री वितानं त्रिषु तुच्छक इत्यमरः ' । कतिपयेऽन्ये लोकाः यमनियमरक्ताः यमनियमयो रक्ताः अनुरक्ताः संतीति शेषः तान्कुर्वतीत्यर्थः । तत्करणकाठिन्यात् कतिपयपदोपादानं । यमनियमग्रहणं अष्टानामप्युपलक्षणं ते च यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयः तत्र अहिंसादिपरिग्रहो यमः शौचादिसंपादनं नियमः पद्मकाद्यासनं रेचकादिप्राणायामः इंद्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः तत्रैव विच्छिद्य अंतरिंद्रियप्रवाहो ध्यानं चित्तवृत्तिनिरोधः समाधिरिति दिक् । भो त्रिपथगे ! जननि ! त्रीन् पथो गच्छतीति त्रिपथगा यद्वा त्रयाणां पथां समाहारस्त्रिपथं ' पथः संख्याऽव्ययादे ' रिति नपुंसकत्वं तेन गच्छतीति त्रिपथगा ' गमेर्डः ' तत्संबोधनं अहं तु जगन्नाथस्तु त्वन्नामस्मरणकृतकामः सन् तव नाम त्वन्नाम ' प्रत्ययोत्तरपदयोश्चे ' ति त्वादेशः त्वन्नामस्मरणं चिंतनं तेन कृताः संपादितास्तादृशाः कामा मनोरथा येन सः एतादृशः सन् जगज्जालं जगतो जालं समूहो जगज्जालं ' जालं समूह आनाय इत्यमरः ' तृणजालेन कक्षसंघेन सदृशं तुल्यं जाने वेद्मि तृणजालेनेति तुल्यार्थैरित्यादिना तृतीया । कलौ नामोच्चारणस्यैव सारत्वात्तदेव करोमीति भावः । तदुक्तम् । ' हरेर्नामैव नामैव नामैव मम जीवनम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथे ' ति दिक् । अत्र नामशब्दो नामोच्चारणपरो बोद्धव्यः ॥ ९४ ॥

भा०—हे माता ! स्वर्ग, मृत्यु, पाताल, तीनों लोकोंके रस्तेसे जानेवाली ! श्रीगंगा ! कोई एक लोग, बडी बड़ी है सेवा जिनकी ऐसे देवोंहीका आराधान करते हैं और कोई यागोंमेंही आसक्त रहते हैं. और कितने एक, अहिंसा—आदि यम और पवित्रता—आदि नियम ऐसे अष्टांग योगाभ्यासमेंही लगे रहते हैं; पर मैतो तेरे नामके स्मरणहीसे पूर्ण मनोरथ होकर, सब जगत-जालको घासके समूहके समान गिनता हूं ॥ ४४ ॥

इदानीं जन्मावधि निरंतरं पुण्यवतां साधूनां श्रेयः कर्तुं

बह्वो देवाः कुशलाः संति निराश्रयाणां पापिनां तु त्वां विना अन्यं हितकरं जगति न पश्यामीत्याह—

अब पैंतालीस ४५ वें श्लोकमें जन्मपर्यंत निरंतर पुण्य करनेवाले साधुओंके कल्याण करनेको कुशल, बहुतसे देव हैं. पर निराधार पापियोंका तौ तेरे-विना और कोईभी हितकर्त्ता जगतमें नहीं देखता हूं ऐसा कहते हैं. ॥

**अविश्रांतं जन्मा, वधि सुकृतजन्मार्जनकृतां;**
**सतां श्रेयः कर्तुं, कति न कृतिनः संति विबुधाः ॥**
**निरस्तालंबाना, मकृतसुकृतानां तु भवतीं;**
**विनामुष्मिँल्लोके, न परमवलोके हितकरम् ॥४५॥**

**सं०–अविश्रांतमिति।** भो त्रिपथगे! जननि ! अविश्रांतं नि[रं]जन्मावधि जन्मप्रभृति जन्मपर्यंतं वा सुकृतजन्मार्जनकृता सुकृतेन पुण्येन जन्मार्जनं जन्मसंग्रहस्तत्कुर्वतां तेषां तादृशानां सतां साधूनां श्रेयः कर्तुं कल्याणं संपादयितुं कति विबुधाः कतिसंख्याका देवाः कृतिनः कुशलाः न संति अपि तु बहवः संतीत्यर्थः । निरस्तालंबानां निरस्तः गतः आलंबः आश्रयो येषां तेषां अकृतसुकृतानां तु न कृतं सुकृतं पुण्यं यैस्तेषां पापिनामित्यर्थः । तेषां तु अमुष्मिन् लोके भवतीं विना त्वामृते परं द्वितीयं हितकरं अभिमतसंपादकं नावलोके न पश्यामि । एतत्सर्वं चित्ते निधाय त्वां अहं शरणं गत इति भावः ॥ ४५ ॥

**भा०**–हे माता ! जन्मपर्यंत निरंतर पुण्योंकरके जन्मोंका संग्रह करनेवाले अच्छे लोगोंके कल्याण करनेके वास्ते कितने देव कुशल नहीं है ? " बहुतही हैं " निराधार जो पुण्य न करनेवाले, उनका तौ हित करनेवाला तेरेविना दूसरा कोई इस लोकमें मै नहीं देखता. ॥ ४५ ॥

इदानीं तव जलं पीत्वा मूढमित्रैः सह विहर्तुं गतोऽहं क्वचिदपि सुखं न लब्धवान् । इदानीं मृदुपवनसंबंधशीतलस्वांके चिरकालमनिद्रं मां त्वं स्वापयेति प्रार्थयते—

अब छिआलीश ४६ वें श्लोकमें मै तेरा जल पीके, अज्ञानी मित्रोंके

साथ फिरनेको गया पर मैनें कहींभी सुख न पाया। अब कोमल वायुके संबंधसे शीतल ऐसी अपनी गोदमें बहुत दिनोंसे निद्रा न कियेभये मेरेको तू पौढ़ा; ऐसी प्रार्थना करते हैं.

**पयः पीत्वा मात, स्तव सपदि यातः सहचरै-;**
**र्विमूढैः संरंतुं, क्वचिदपि न विश्रांतिमगमम् ॥**
**इदानीमुत्संगे, मृदुपवनसंचारशिशिरे;**
**चिरादुन्निद्रं मां, सदयहृदये शायय चिरम् ॥४६॥**

**सं०—पय इति।** भो मातः! तव पयः पीत्वा विमूढैः विशेषेण मूढाः मूर्खाः विमूढाः तैः विशेषश्च ईषदपि हिताहितज्ञानशून्यत्वं तादृशैः सहचरैः सह साकं चरंति भक्षंति गच्छंति वा ते सहचराः मित्राणि तैः सह सपदि शीघ्रं संरंतुं विहर्तुं यातः गतः 'गत्यर्थाकर्मके' त्यादिना याधातोः कर्तरि क्तः एतादृशः अहं क्वचिदपि कस्मिंश्चित्स्थलेऽपि कस्मिंश्चिद्विहारेऽपि वा विश्रांतिं विश्रामं न अगमं सपदि यात इति वा योजना। यद्वा तव पयः सपदि पीत्वेति संबंधः। एतेन तृष्णावशात् शीघ्रं तव जलपानमात्रं कृतं न स्नानादिकम् तेन स्वस्मिन्नपराधबाहुल्यमस्तीति सूचितम्। भो सदयहृदये! दयया सहितं सदयं तादृशं हृदयं यस्याः सा तत्संबोधनं एतादृशी भो मातः! इदानीं संप्रति, 'एतर्हि संप्रतीदानीमधुना सांप्रतं तथेत्यमरः' मृदुपवनसंचारशिशिरे मृदुः कोमलः अल्प इत्यर्थः। एतेन वात्याया दुःखप्रदत्वान्निरासः सूचितः। मृदुश्चासौ पवनश्च तस्य संचारः गमनं संबंधो वा तेन शिशिरः शीतलं एतेन श्रमसंत्रस्तस्य निद्रास्थानयोग्यत्वमावेदितं एतादृशे उत्संगे अंके चिरात् बहुकालं उन्निद्रं उद्गता निद्रा यस्य सः एतादृशं मां शायय स्वापय निद्रां कारयेत्यर्थः। शीङ् स्वप्ने इति धातोर्णिजंताल्लोण्मध्यमपुरुषैकवचनं सिप्। 'अतोहे' इति हेर्लुक् निद्रायाः सुखविशेषरूपफलस्य प्रयोज्यगामित्वात् प्रयोजकरूपकर्तृगामित्वाभावेन णिचश्चेत्यात्मनेपदम् न। चिराच्छाययेति वा योजना। लोकेऽपि माता पुत्रं अंके स्वापयाति इति प्रसिद्धमेव एतदर्थमेव मातरिति संबोधनम् ॥ ४६ ॥

भा०—हे माता ! मै तेरा जल पीके, विशेष अज्ञानी मित्रोंके साथ शीघ्र ( जल्दी ) ही खूब क्रीडा करनेको गया, पर कहीं किसीभी विहारमें विश्रांति ( सुख ) न पाया; परंतु अब कोमल पवनके चलनेसे शीतल ऐसी तेरी गोदमें, बहुतकालसे निद्राभंग भए हुये मेरेको, हे दयालु हृदय-वाली ! माता ! बहुत दिन पौढ़ा; ऐसी प्रार्थना है ॥ ४६ ॥

इदानीं ममोद्धाराय कटिबंधादिकं कुर्वित्याह—

अब सैतालीश ४७ वें श्लोकमें, मेरे उद्धारके लिये कमर=आदि बांध-कर, तैयार हो; ऐसा कहते हैं. ॥

**बधान द्रागेव, द्रढिमरमणीयं परिकरं;**
**किरीटे बालेंदुं, नियमय पुनः पन्नगगणैः ॥**
**न कुर्यास्त्वं हेला,-मितरजनसाधारणतया;**
**जगन्नाथस्यायं, सुरधुनि समुद्धारसमयः ॥ ४७ ॥**

सं०—बधानेति । भो सुरधुनि ! जगन्नाथस्य तन्नाम्नः अयं समुद्धारसमयः सम्यगुद्धरणं समुद्धारः तस्य समयः कालः अस्तीति शेषः । यद्यपि 'आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृण्हीयाज्ज्येष्ठापत्यकलत्रयो' रिति निषेधात् स्वनामग्रहणमश्रेयस्करं भवति । तथापि अत्यंतातुरतया निषेधोल्लंघनम् । अत एव 'हा पितः कासि हे सुभ्रु बह्वेव विललाप सः' इति भट्टिप्रयोगः संगच्छत इति दिक् । ननु अस्तु तवोद्धारसमयः मया किं कर्तव्यमित्यकांक्षायामाह—बधानेति त्वं द्रढिमरमणीयं अतिशयेन दृढ इति द्रढिमा 'वर्णदृढादिभ्यः ष्यञ् चेति' चादिमनिच् 'रऋतोहलातेर्लघोरिति' ऋकारस्य रकारः। द्रढिमा चासौ रमणीयश्च तं अतिशयेन सुंदरं चेत्यर्थः । एतादृशं परिकरं कटिं द्राक् शीघ्रं बधान बधबंधने 'भवेत्परिकरो व्राते पर्यंकपरिवारयोः । प्रगाढगात्रैकबंधे विवेकारंभयोरपीति विश्वः' ममोद्धाराय शीघ्रं कटिबंधं कुर्विति भावः । पुनस्त्वं किरीटे मुकुटे 'अथ मुकुटं किरीटं पुंनपुंसकमित्यमरः' बालेंदुं बालश्चासाविंदुश्च तम् कलात्मकं चंद्रम् पन्नगगणैः पन्नं पतितं गच्छंति ते पन्नगाः सर्पा-

स्तेषां गणाः समूहास्तैः नियमय नियमनं कुरु तत्रैव स्थापयेत्यर्थः । अन्यथा ममागमनसमये पतिष्यंतीति भावः । लोकेऽपि कश्चन मनुष्यः कस्यचिद्व्याघ्रादिपीडितस्य यदा मोचनं करोति तदा कटि-बंधशिरोभूषणादिकं दृढं करोतीति प्रसिद्धम् । यद्वा किरीटे पन्न-गगणैर्बालेंदुं नियमयेति योजना । पुनस्त्वमितरजनसाधारणतया इतरः अन्यः नीचो वा 'इतरस्त्वन्यनीचयोरित्यमरः' स चासौ लोकश्च जनश्च तेन साधारणः तुल्यः तस्य भावः साधारणता तया हेलां अर्थात् मम अनादरं न कुर्याः माकुर्वित्यर्थः । परम-त्वद्भक्ते मयि अन्यजनतुल्योऽयमिति बुद्धिं माकुर्विति भावः । अत्र लोकोक्त्यलंकारः । तदुक्तं कुवलयानंदे 'लोकप्रवादानुकृ-तिर्लोकोक्तिरिति भण्यते' इति ॥ ४७ ॥

[illegible]–हे गंगा ! जल्दीसे सुंदर कमरको मजबूत बांध और मुकुटमें बालचंद्रमाको सर्पसमूहोंकरके बांधकर, 'तयार हो' तू मेरेको औरोंके समान गिनके, अनादर न करेगी, कारण कि—यह समय, जगन्नाथका (मेरा) सही सही उद्धार करनेका है ॥ ४७ ॥

इदानीं गंगारूपं स्तौति—

अब अड़तालीशवें ४८ श्लोकमें, श्रीगंगाजीकी मूर्तिका स्वरूप वर्णन करते हैं ॥

**शरच्चंद्रश्वेतां, शशिशकलश्वेतालमुकुटां;**
**करैः कुंभांभोजे, वरभयनिरासौ च दधतीम् ॥**
**सुधाधाराकारा, भरणवसनां शुभ्रमकर;–**
**स्थितां त्वां ये ध्यायं,त्युदयति न तेषां परिभवः**

सं०–शरदिति । भो सुरधुनि! ये जनाः त्वां ध्यायंति चिंतयंति ते-षां जनानां परिभवः अनादरः 'अनादरः परिभवः परीभावस्तिर-स्क्रियेत्यमरः' नोदयति उत्पन्नो न भवतीत्यर्थः । यद्यपि अयगतावि-ति धातुरात्मनेपदी तथापि 'इटकिटकटीत्यत्र' प्रश्लिष्टस्य ईधातो-रुत्पूर्वस्येदं रूपं बोध्यं । अत एव 'उदयति विततोर्ध्वरश्मिरज्जाविति' माघप्रयोगः संगच्छत इति दिक् । कथंभूतां त्वाम् शरच्चंद्रश्वेताम्

शरदि शरत्काले 'अथ शरत्स्त्रियामित्यमरः' तत्र यश्चंद्रस्तद्वच्छेतां शुभ्रां परमगौरामित्यर्थः । शरदित्यनेन परमनैर्मल्यं सूचितम् । पुनः कथंभूतां शशिशकलश्वेतालमुकुटाम् अलति दंशं कुर्वन् गच्छतीत्यलः सर्पः श्वेतश्चासौ अलश्च श्वेतालः शुभ्रसर्पः शशिनश्चंद्रस्य शकलः खंडः शशिशकलः शशिशकलश्च श्वेतालश्च शशिशकलश्वेतालौ तौ मुकुटे यस्याः सा ताम् यद्वा श्वेताश्च ते अलाः भूषणानि च श्वेतालाः यद्वा श्वेतस्य रजतस्य अलाः भूषणानि 'दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपीत्यमरः' । गमनभूषणार्थकादलधातोः पचाद्यच् शेषसमासः पूर्ववत् । यद्वा शशिशकलश्वेतालः तादृशो मुकुटो यस्या सा ताम् यद्वा शशिशकलश्वेताल इव शुभ्रभूषणमिवेति व्याघ्रादित्वादुपमितसमासः । शशिशकलश्वेतालः तादृशो मुकुटो यस्याः सा ताम् यद्वा शशिशकल[illegible] श्वेतगुणः तं आसमंतात् लातीति शशिशकलश्वेतालः तादृशो मुकुटो यस्याः सा ताम् यन्मुकुटे चंद्रस्य प्रभा प्रसृता भवतीति भावः । लादाने इति धातोः 'आतश्चोपसर्गे' इति कः 'गुणे शुक्लादयः पुंसीत्यमरः' । यद्वा शशिशकलं च श्वेतश्च शशिशकलश्वेतौ श्वेतो रजतं तौ आसमंताल्लातीति शशिशकलश्वेतालः तादृशो मुकुटो यस्याः सा तां यस्याः रौप्यमुकुटे शशिशकलं वर्तत इत्यर्थः । अन्यत् विस्तरभयान्न लिख्यते । पुनः कथंभूतां करैः चतुर्भिर्हस्तैः कुंभांभोजे कुंभश्च अंभोजं च कुंभांभोजे कुंभो घटः अंभोजं कमलं ते वरभयनिरासौ च भयस्य निरसः नाशः अभयमित्यर्थः । वरश्च भयनिरासश्च वरभयनिरासौ तौ च दधतीं बिभ्रतीं चतुर्भिर्हस्तैरिमानि चत्वारि दधतीति भावः । पुनः कथंभूतां त्वां सुधाधाराकाराभरणवसनां सुधायाः अमृतस्य धारा आभरणानि वसनं च आभरणानि भूषणानि वसनं वस्त्रम् 'अलंकारस्त्वाभरणं परिष्कारो विभूषणम्' 'वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकमित्यमरः' सुधाधारावत् आकारः रूपं येषां तानि सुधाधाराकाराणि तादृशानि आभरणवसनानि यस्याः सा तां अतिशुभ्राभरणवसनामित्यर्थः । पुनः कथंभूतां त्वां शुभ्रमकरस्थितां शुभ्र-

श्वासौ मकरश्च शुभ्रमकरः मकरो मत्स्यः तत्र स्थितां तां शुभ्र-मत्स्यवाहिनीमित्यर्थः ॥ ४८ ॥

भा०—हे देवगंगा ! शरदृऋतुके निर्मल-चंद्रके तुल्य सफेद शरीरका रंग है जिसका ऐसी और अर्धचंद्र और सफेद-सर्पोंका मुकुट पहिरे भयी और चारों ४ हाथोंकरके घड़ा, कमल और वरदान, अभयदान इनको धारण करती और अमृतकी धारावोंके नाईं सफेद आभूषण और वस्त्र पहरे-भई और सफेद मगरके ऊपर बैठी भई ऐसी तेरेको जे मनुष्य ध्यान करैंगे उनका कभी पराभव ( हार ) न होगा ( गी ) ॥ ४८ ॥

इदानीं गंगा मम शरीरसुखं करोत्वित्याह—

अब उल्लास ४९ वें श्लोकमें, गंगा मेरे शरीरको सुख करे; ऐसे तिलोंको कहे हैं ॥

**दरस्मितसमुल्लस, द्वदनकांतिपूरामृतै-;**
**भवज्वलनभर्जिता, ननिशमूर्जयंती नरान् ॥**
**चिदेकमथचंद्रिका, चयचमत्कृतिं तन्वती;**
**तनोतु मम शं तनोः, सपदि शंतनोरंगना ॥ ४९ ॥**

सं०—दरस्मितेति । शंतनोः भीष्मपितुरंगना कल्याणानि अंगानि यस्याः सा अंगना 'अंगात्कल्याणे' इति पामाद्यंतर्गणसूत्रेण अंगशब्दान्नप्रत्ययः श्रीगंगा मम जगन्नाथपंडितस्य तनोः शरीरस्य 'ङिति ह्रस्वश्चेति' वैकल्पिकत्वात् धिसंज्ञायां गुणः शं सुखं सपदि शीघ्रम् तनोतु विस्तारयतु । प्रार्थनायां लोट् । कथंभूताङ्गना दरस्मितसमुल्लसद्वदनकांतिपूरामृतैः दरं ईषत्तच्च तत् स्मितं च दरस्मितं तेन समुल्लसद्विकासमानं तच्च तद्वदनं च तस्य कांतिः छविः तस्याः पूराः आधिक्यानि त एवामृतानि तैः भवज्वलनभर्जितान् भव एव संसार एव ज्वलनः अग्निः तेन तत्र वा भर्जिता दग्धास्तान् एतादृशान् नरान् मनुष्यान् अनिशं सर्वदा ऊर्जयंती जीवयंती यद्वा भवस्य महादेवस्य ज्वलनः तृतीयनेत्राग्निः तेन तत्र वा भर्जितान् । एवं च तादृशं कृत्यं कुर्वत्या मम वपुः सुखकरणेन कोप्यायास इति भावः । पुनः कथंभूताऽगना चिदेकम-

यचंद्रिकाचयचमत्कृतिं चिदेकमयी चित्स्वरूपा सा चासौ चंद्रिका कौमुदी च 'चंद्रिका कौमुदी ज्योत्स्ना' इत्यमरः तस्याः चयः समूहः तस्य चमत्कृतिः चमत्कारः तां तन्वती तनोतीति तन्वती विस्तारयंती तनोतेः शता। अनेकचंद्रप्रकाशं स्वयमेव करोतीति भावः। अस्मिन् श्लोके पृथ्वीछंदः 'जसौ जसयला वसुग्रहयतिश्च पृथ्वीगुरुरिति' लक्षणात्॥ ४९॥

भा०-किंचित् हास्यकरके शोभायमान मुखकी कांति (छवि)के समूहरूप अमृतोंकरके, संसाररूप अग्निके तापमें जले भये मनुष्योंको निरंलध। उज्जीवन करती ऐसी और केवल चैतन्यरूप चांदनीके समूहके चमत्कारको विस्तार करनेवाली, ऐसी शंतनु-राजाकी[1] सुंदरांगी स्त्री गंगा मेरे शरीरको तत्काल सुखका विस्तार करे. "इस श्लोकमे पृथ्वी छंद है इसमें एक विराम आठवें अक्षरपर है और दूसरा अंतमें यानी [illegible] रका है" ऐसे हरपादमें सत्रह सत्रह अक्षर हैं॥ ४९॥

इदानीं संसारज्वालानिर्दग्धवपुषो मम तापं शमयेत्याह—

अब पचाश ५० वें श्लोकमें, संसारकी ज्वालावोंकरके जलते-शरीरवाले मेरा ताप शांत कर; ऐसी प्रार्थना करते हैं.॥

**मंत्रैर्मीलितमौषधैर्मुकुलितं, त्रस्तं सुराणां गणैः;**
**स्रस्तं सांद्रसुधारसैर्विदलितं, गारुत्मतैर्ग्रावभिः॥**
**वीचिक्षालितकालियाहितपदे, स्वर्लोककल्लोलिनि;**
**त्वं तापं निरयाधुना मम भव,-ज्वालावलीढात्मनः॥**

सं०-मंत्रैरिति। वीचिक्षालितकालियाहितपदे कालियस्याहितः शत्रुः कालियाहितः विष्णुः तस्य पदं चरणः वीच्या क्षालितं प्रक्षालितं कालियाहितपदं यया सा तत्संबोधनम् यद्वा कालियोऽहितः शत्रुर्यस्य स कालियाहितो विष्णुः शेषं पूर्ववत् यद्वा कालिये आहितं

---

१ महाभारतमें कथा है कि—गंगा शापसे मानुषी भयी और शंतनुराजाको व्याहके, अष्टवसुओंको उत्पन्न किया. सात गंगाजलमें डुबाये और आठवें भीष्म कौरवपांडवोंके पितामह भये.

अर्थात् विष्णुना स्थापितं तच्च तत्पदं च शेषं प्राग्वत्। हे स्वर्लोक-कल्लोलिनि! स्वर्लोकस्य सुरलोकस्य कल्लोलिनी नदी तत्संबोधनं। त्वं अधुना भवज्वालावलीढात्मनः भवस्य ज्वालाः ताभिः अवलीढः कवलितः व्याप्त इत्यर्थः। तादृशः आत्मा यस्य तस्य मम तापं निरय निवारय। तिरयेति पाठः। तत्र तिरस्कुरु तिरःशब्दाण्णिजंताल्लोट्। 'अव्ययानां भमात्रे टिलोपः' इति तिरसष्टेर्लोपः। क्वचित्तु भवव्यालावलीढात्मनः इति पाठः तत्र भव एव व्यालः सर्पस्तेनावलीढः तादृश आत्मा यस्य स तस्येति व्याख्येयम्। ननु तादृशतापनिवारणे मंत्रादयो बहवः संतीति चेत्तेऽपि न शक्ता इत्याह– मंत्रैरित्यादि मंत्रैर्मीलितं साहसेन तापनिवारणाभावात् संकुचितमित्यर्थः। अयं हेतुः सर्वत्र पूर्वार्धे योज्यः बहुदस्तु एकोऽपि न समर्थ इति बोधनाय एवमग्रेऽपि बोध्यम्। यद्वा यत्र बहुभिः संकुचितं तत्र एकस्य का वार्तेत्यर्थबोधनाय औषधैस्तापनिवारणाय योग्यैर्वैद्यशास्त्रप्रसिद्धैर्मुकुलितं मुकुलीभावमापन्नं सुराणां देवानां गणैः संघैः त्रस्तं त्रासं गतं सांद्रसुधारसैः सांद्राः निबिडाः तेच ते सुधारसाश्च तैः अमृतजलैः 'रसो जले रसो हर्ष इत्यनेकार्थकोशः' स्रस्तं अधः पतितम् 'स्रंसु अधःपतने' पदत्वाभावात् 'वसुस्रंस्वि' ति दत्वं न। गारुत्मतैः गरुत्मान् गरुडः 'गरुत्मान् गरुडस्तार्क्ष्य इत्यमरः' देवता येषां ते गारुत्मताः तैः 'सास्य देवते' त्यण् यद्वा गरुत्मत इमे गारुत्मतास्तैः 'तस्येद' मित्यण् एतादृशैः ग्रावभिः पाषाणैः 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषदित्यमरः' विदलितं विशेषेण दलितं स्फुटितम् विशेषश्च खंडखंडभवनम्। अत्र सर्वत्र पूर्वार्धे 'नपुंसके भावे क्तः' अतएव कर्तुरनभिहितत्वान्मंत्रैरित्यादिषु कर्तरि तृतीया। अत्र श्लोके शार्दूलविक्रीडितम् 'म्सौ ज्सौ तौ गादित्यऋषय' इति लक्षणात्॥ ५०॥

भा०–मेरे ताप हरनेको सब मंत्रोंनें संकोच कर लिया और सब औषधोंनें मुकुली-भाव लिया और देवोंके गणोंनें भय पा-लिया और जमेभये अमृत-रसनें स्थान छोड़, पतन किया और गारुड़ ( जिसके देवता गरुड़

हैं ) ऐसे पत्थरोंनें पड़के टूक टूक होना सुरू किया; इसलिये हे गंगे ! कालियसर्पके शत्रु विष्णुके चरणोंकूं, अपनी लहरोंसे धोनेवाली ऐसी और स्वर्गलोकमें बड़े बड़े तरंगोंकरके बहनेवाली हे माता ! तूही संसारकी ज्वालावोंसे व्याप्त देहवाले मेरे संतापको दूर करेगी. इस श्लोकमें शार्दूलविक्रीड़ित छंद है, जिसमें हर पादमें उन्नीश उन्नीश अक्षर और दो दो विराम हैं, जैसे कि—एक बारहवें अक्षरपर और दूसरा अंतमें यानी सातवेंमें है ॥ ५० ॥

इदानीं गंगालहरीनटघटीतांडवं अस्मान् पुनात्विति प्रार्थयते—

अब एक्यावन ५१ वें श्लोकमें माथेमें घड़ा रखकर, नाचनेवाले बहुरूपिएके तुल्य, गंगाके लहरियोंका नृत्य हमलोगोंको पवित्र करे. ॥

**द्यूते नागेंद्रकृत्ति, प्रमथगणमणि, श्रेणिनंदींदुमु[ख्यं] सर्वस्वं हारयित्वा, स्वमथपुरभिदि, द्राक्पणीकर्तुकामे ॥ साकूतं हैमवत्या, मृदुलहसितया, वीक्षितायास्तवांब; व्यालोलोल्लासिवल्गल्लहरिनटघटी, तांडवं नः पुनातु ॥ ५१ ॥**

**सं०—द्यूत इति ।** भो स्वर्लोककल्लोलिनि ! तव भवत्याः व्यालोलोल्लासिवल्गल्लहरिनटघटीतांडवम् व्यालोलाश्चंचलाः उल्लासिन्यः ऊर्ध्वं उच्छलंत्यः वल्गंत्यः गच्छंत्य एतादृश्यो याः लहर्यस्ता एव नटस्तस्य घटीतांडवं शिरसि घटीं धृत्वा नर्तनम् यद्वा नटस्य घटीतांडवं नटघटीतांडवम् व्यालोलोल्लासिवल्गल्लहरीणां नटघटीतांडवं तन्नः अस्मान् भक्तजनान् पुनातु पवित्रीकरोतु । व्यालोलादिविशेषणविशिष्टलहरीभवने मूलमाह । कथंभूतायास्तव द्यूते दुरोदरे परस्य जिगीषया अक्षैः क्रीडनं द्यूतं तत्र अत्र विजिगीषायाः सत्त्वात् ' दिवो विजिगीषाया ' मित्यनेन निष्ठा तस्य णत्वं न । नागेंद्रकृत्तिप्रमथगणमणिश्रेणिनंदींदुमुख्यम् नागेंद्रो वासुकिः कृत्तिर्गजादिचर्म प्रमथगणः तन्नामकः पारिषदः मणिश्रेणिः मणीनां रुद्राक्षादिमणीनां श्रेणिः पंक्तिः नंदी स्ववाहन-

भूतो वृषभः इंदुः स्वशिरोभूषणभूतः चंद्रः एतेषां इतरेतरयोगद्वं-द्वः नागेंद्रकृत्तिप्रमथगणमणिश्रेणिनंदींदवः मुख्याः श्रेष्ठाः यस्मि-स्तत् एतादृशं सर्वस्वं सर्वं च तत् स्वं च सर्वस्वं धनं हारयित्वा शिवसकाशात् पार्वती गृहीत्वा हारयित्वेत्यत्र णिजंतात्क्त्वा अत्र प्रयोजककर्तृत्वं पार्वत्याः प्रयोज्यकर्तृत्वं शिवस्य अतएव 'समा-नकर्तृकयोः पूर्वकाले' इत्यनेन क्त्वा सुलभः वीक्षणकर्तृत्वाहरण-मिति बोधः। प्रकृतमनुसरामः। अथ सर्वस्वहरणानंतरं पुरभिदि पुरनामानं दैत्यं भिनत्ति विदारयतीति पुरभित् तस्मिन् शिवे स्वमात्मानं पणीकर्तुकामे सति पणनं व्यवहरणं पणः 'घञर्थे कविधानमिति कः। अपणः पणः यथा संपद्यते तथा कर्तुमिति पणीकर्तुं कामः इच्छा यस्य सः तस्मिन् 'लुंपेदवश्यमः कृत्ये तुं-काममनसोरपि' समो वा हिततयोर्मांसस्य पचियुट् घञोरिति पृषोदरादिगणपठितवचनेन कर्तुमिति मकारलोपः। तादृशे सति मृदुलं हसितं हास्यं यस्याः सा तथा। इदानीं सपत्नीभूतगंगाया-चनेन श्रेष्ठसिद्धिर्भविष्यतीत्याशयेन हसिता एतादृश्या हैमवत्या हिमवतो हिमाचलस्यापत्यं स्त्री हैमवती 'तस्यापत्य' मित्यण् 'टिड्ढाणे' तिङीप् तया पार्वत्या साकूतं आकूतेन अभिप्रायेण सहितं साकूतं तद्यथा स्यात्तथा वीक्षिताया विशेषेणेक्षिता वीक्षिता तस्याः विशेषश्च जटाजूटस्थितत्या द्रष्टुमशक्यायाः अपि यत्नतो दर्शनं व्यापारवत्त्वं यद्यपि शिवस्य पूर्वोक्तम् सर्वस्वं मया हृतं अत एव शिवः आत्मानं पणीकरोति तथापि गंगा उर्वरिता वर्तते साच सपत्नीभूतत्वान्मामवमत्य एतावत्कालपर्यंतं शिवशिरसि स्थिता वर्तते इदानीं याचयित्वा दासी संपादनीयेति साकूतमित्यस्यार्थ इदि दिक्। नर्तनप्रियस्य शिवस्य द्यूतं विस्मारयितुं गंगया नृत्य-मारब्धमिति दिक् हैमवतीत्यनेन कठिनहृदयत्वात्तेन सर्वस्वहरणे योग्यत्वम्। अस्मिन् श्लोके स्रग्धरावृत्तम्। 'स्रग्धराम्रौभ्नौ यौय्-त्रिःसप्तका' इति लक्षणात्॥ ५१॥

**भा०**–हे गंगा! श्रीमहादेवके साथ द्यूतक्रीडामें ( पाशोंके जुवेंमें ) पार्वतीनें सर्पराज, गजचर्म, ( हाथीका चमड़ा ) समस्त भूतोंके गण,

रुद्राक्ष--आदि मालाओंके दाने, नंदीश्वर, चन्द्रमा यह मुख्य मुख्य जिनमें, ऐसी ऐसी सब चीजें जीत-लीं, तब शिवजी तुरत अपने शरीर. काही दांव लगाने चाहते हैं तहां अब मेरी सवत मेरे वश होगी ' ऐसे अभिप्रायसे कुछ कुछ हँसके, पार्वतीनें तेरी तरफ अच्छीतरहसे देखा, तबहीं शिवजीको जुवां खेलना भूलजावे इस अभिप्रायसे, विशेष हिलतीं और उछलतीं और एक एकसे मिलतीं जे लहरिएं उनका जो घड़ा माथे-पर धरके, नाचते बहुरूपिएके समान तांडव ( नाच ) सो हे मय्या ! हमको पवित्र करे. इस श्लोकमें स्रग्धरा छंद है. जिसमें हरएक पादमें इक्कीश इक्कीश अक्षर और तीन तीन विराम हैं, पहेला सातपें, दूसरा चौदहपर और तीसरा इक्कीशपर यानी सात सातका कहा है ॥ ५१ ॥

इदानीं चरमश्लोकेन स्वांगान्यमलीकरणं प्रार्थयते—

अब बावन ५२ वें अंतके श्लोकमें, अपने अंगोंका पवि[illegible] मांगते हैं. ॥

**विभूषितानंगरिपूत्तमांगा, सद्यः कृतानेक-जनार्तिभंगा ॥ मनोहरोत्तुंगचलत्तरंगा, गंगा ममांगान्यमलीकरोतु ॥ ५२ ॥**

**सं०—विभूषितेति।** गंगा भागीरथी गंगाशब्दार्थस्तु "स्मृतं सद्य" इत्यष्टमश्लोके उक्तः मम जगन्नाथस्यांगान्यमलीकरोत्वित्यर्थः । कथं-भूता गंगा विभूषितानंगारिपूत्तमांगा अनंगस्य कामस्य रिपुर्वैरी शिवः तस्योत्तमांगं मस्तकं विभूषितं स्वस्थित्या शोभायुक्तं कृतम् अनंगरिपूत्तमांगं यया सा। पुनःकथंभूता सद्यः तत्कालमेव कृताने-कजनार्तिभंगा अनेके च ते जनाश्च तेषामार्तिः पीडा तस्या भंगः नाशः कृतः संपादितः अनेकजनार्तिभंगो यया सा यद्वा जनानां आर्तयः पीडाः अनेकाश्च ताः जनार्तयश्च तासां भंगः अनेकज-नार्तिभंगो यया सा सद्यः कृतानेकजनार्तिभंगेत्येकं पदं वा । पुनः कथंभूता मनोहरोत्तुंगचलत्तरंगा मनोहरा अतिरमणीया उत्तुंगा उन्नता चलंतश्चंचलास्तरंगा यस्याः सा । अस्मिन्पद्ये उपजातिना-मकं वृत्तं ' इंद्रवज्रा तौज्गौग् ' ' उपेंद्रवज्रा जतजास्ततौ गौ '

अनंतरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता" इति लक्ष-णात् ॥ ५२ ॥

भा०–कामदेवके शत्रु महादेवजीके मस्तकको जलोंसे शोभित किया जिसने और उसी वख्त अनेक लोकोंके दुःखोंको नाश करनेवाली और अतिसुंदर और ऊंची ऊंची और चंचल तरंगोंवाली ऐसी भागीरथी गंगा मेरे अंगोंको निर्मल करे, ऐसी प्रार्थना है. इस श्लोकमें उपजाति छंद है. जिसका हरएक पाद ग्यारह ग्यारह अक्षरका है. ॥ ५२ ॥

स्वकाव्यपठनस्य फलमाह—

अब इस तिरपन ५३ वें श्लोकमें, इस गंगालहरी–नामक अपनी काव्यके पढ़नेका फल कहते हैं. ॥

**पणा मां पीयूषलहरीं, जगन्नाथेन निर्मिताम् ॥**
**यः पठेत्तस्य सर्वत्र, जायंते सुखसंपदः ॥ ५३ ॥**

**इति श्रीमत्तैलंगकुलोद्भवजगन्नाथपंडितविर-**
**चिता श्रीगंगालहरी समाप्ता ॥**

**सं०–इमामिति ।** पीयूषस्यामृतस्य लहरीं त्वां यथा पीतामृ-तलहर्या आनंदजनकत्वं तथा अस्या अपीति शेषः । अन्यकृति-भ्रमवारणायाह जगन्नाथेन निर्मितामिति निर्मितां कृतां । शेषं सुगमं शिवम् ॥ ५३ ॥

भा०–यह गंगालहरी मानों अमृतहीकी लहरी है और जगन्नाथपंडि-तकी बनाई है; इसको जो पढ़ै उसको सुख और संपदा सब जगह खूब मिलै. इस श्लोकमें अनुष्टुप् छंद है, जिसमें हरएक पादमें आठ आठ अक्षर हैं. ॥ ५३ ॥

यद्यप्यहं मंदमतिस्तथापि टीकासमाप्तिर्हि बभूव शीघ्रम् ॥
नात्रापरं कारणमस्ति किंचिच्छ्रीभास्कराज्ञा किल किंत्वमोघा ॥१॥
नृपं द्विपं वा तुरगं मृगं वा शुकं बकं वा महिषं वृषं वा ॥
हरीकरोष्यंग न कं हि गंगे स्नातं भवत्यां सकृदीशसंघे ॥ २ ॥

नारायणो यस्य पितामहोभून्मणीकभट्टश्च पिता तदीयः ॥
गोपी यदीया जननी सुशीला टीका कृता तेन सदाशिवेन ॥ ३ ॥
भक्तोपोद्गमहेतोः केदारत्वं स्थितोसि भूभृति किम् ॥
तत्राप्यागत्य त्वां स्वशिवं याचे हि तत्सर्वम् ॥ ४ ॥
इति सदाशिवकृता टीका समाप्ता ॥ श्रीसांबसदाशिवार्पणमस्तु ॥

॥ समाप्तेयं गंगालहरी ॥

इति श्रीतापीपुरस्थशास्त्रि–श्रीयुतभाउशर्मणा श्रीयुतहरिप्रसादनियोगात् कृता गंगालहरीभाषाटीका समाप्ता ॥ शुभम् ॥

खेषुगोगोमिते वर्षे पौषे पूष्णि शिवातिथौ ॥
पीयूषलहरी कृष्णे रामभद्रेण शोधिता ॥ १ ॥

# शुकसागर ( शुकसागर-सुखसागर )

## अर्थात् श्रीमद्भागवत द्वादशस्कन्धभाषा.

संपूर्ण महाशयोंको मालूम होवे कि—यह पुस्तक इस कालमें उपरि लिखित तीन नामोंसे प्रसिद्ध है इसमें केवल नामोंकाही फेर है. और कथा तो सबोंमें एक श्रीमद्भागवतहीकी है इसलिये कोई पाठकगण भ्रम नं करें. और हे प्रियमित्रवरो! आपको मालूम होवे कि-हमने इस पुस्तककी द्वितीयावृत्ति छापी है. सो इसमें **सुमेरपुरनिवासी देवकीनन्दनात्मज पंडित श्रीरामभद्रजीसे** बहुशः शुद्ध करवाय तथा आप लोगोंके विनोदार्थ अतिरमणीक मनोरंजक चमत्कारिक कथाप्रसंगके संमिलित, श्रुति, स्मृति, इतिहास, पुराणप्रमाण और वार्तिक इतिहास जोकि-पुराणोंमें मिलते हैं वे सब नीचे बारीक अक्षरोंमें टिप्पणरूपसे लिखवा दिये हैं. और हे महाशयो! आप लोगोंके आनन्दार्थ दोहा, चौपाई, छन्द, सोरठा कवित्त, होली, ध्रुवछंद, ठुमरी-आदि रागरागनियां जोकि-श्रीकृष्णचन्द्र आनन्दकन्दकी सुखमय लीलाकेसाथ संबंध रखते हैं उन्हेंभी टिप्पणमें लगवा दिये हैं. और पूतना, बकासुर-आदि सम्पूर्ण राक्षस और इनकेशिवाय अन्यभी जो भगवतके हस्ततीर्थमें गति पाये हैं उन्होके पूर्वजन्मके श्राप, उद्धार-आदिकीभी कथायें लगादीं हैं. और कितनेएक महाशयोंने हुक्का, चिलम, खटमल, चाचा इत्यादि नकलोंके अष्टाष्टक लिखके, ऐसी धर्मशालामें सहनकियोंकी मार करी है कि-जिसे भाववेत्ता सुजन जन पुस्तक देखनेसे भलीभांति समझेंगे. और वैसे तो "नाम बड़ा दर्शन थोड़ा" क्योंकि लिखनेमें तो बड़ी २ जाहरखबरोंमें घसीट मारते हैं परंतु पुस्तकमें देखो तो मूल सूखेमें अर्थ गीलेमें । बस, अब इस विषयमें बहुत लिखनेसे क्या? क्योंकि प्रत्यक्षमें आदर्शका काम क्या? इसीसे हम मुक्तकंठस्वरसे कहते हैं कि-हमारा यह भाषान्तर श्रीधरीटीकासे एक अक्षरभी विरुद्ध नहीं है. चाहे जो विद्वान् मिलाके, देखे.

बड़ा अक्षर किंमत रुपये ७ टपाल रु. १-६
छोटा अक्षर किंमत रुपये ५ टपाल रु. १

**हरिप्रसाद भगीरथजी,**

ठि०—कालकादेवीरोड़ रामवाड़ी; मुंबई.